तदेतत्संप्रदृश्यैव कर्मभूमिं प्रविश्य ताम् ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥ ८९
मासर्तुसंज्ञापरिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥ ९०
धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपून्न बाधते ।
श्रुतेन किं येन न धर्ममाचरे-
त्किमात्मना यो न जितेन्द्रियो वशी ९१
इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदेशिकम् ॥ ९२

C. 12. 12137
B. 12. 322(1).94
K. 12. 329. 93

इति श्रीमहाभारते शान्तिपर्वणि नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

---

तस्य यच्; K6 V1 Bo. 6 (marg.). 7. 9 Dn1. n4 Ds D2. 8 editions पश्यति; B6 (orig.) Da3. a4 D8 °तश्च; D5 पश्य वा; M1. 5–7 पश्यैतच् (for पश्य त्वं). Dn1 D2. 8 editions छिद्र-; D3 T2 चित्र-; D5 स्थिर-; G3 शत्रु- (for छिद्र-). Ś1 K1. 2. 4 -रूपं (for -भूतं). M1. 5–7 तु (for हि). D7 अपश्यास्थिरभूतं हि; T1 अपश्यतो हर्तास्तत्र. — b) T1 जीवलोकान् (for °लोकं). — c) M1 तं (for तत्). B9 D7 T G1. 2. 6 यथा (for तथा).

89 G2 om. 89 (cf. v. l. 87). — a) Ś1 K1. 2. 7 तदेव; K4 D4. 5. 7. 9 तदेवं; M1. 7 तदैतत् (for तदेतत्). Ś1 (marg. as in text) K2. 4 संप्रविश्य( K4 °श्ये); Da4 °देश्य; D4. 5 °दृश्य (for °दृश्य). K4 च; D7 M1. 5–7 [ए]वं (for [ए]व). T1 G6 तवैतत्प्राप्य पश्येत; T2 G1. 3 तथैव तत्प्रपश्येत. — b) D5. 7 -भूतं (for -भूमिं). K6 V1 Bo. 6–8 Da3. a4 Dn1. n4 Ds D2. 3 T1 G1. 3. 6 प्रपश्यता; K7 D4. 9 प्रपद्यतां; B9 D5. 7 T2 M1. 5–7 प्रप( D7 °द्व )श्यतां; Bom. ed. प्रपश्यतः (for प्रविश्य ताम्). — d) Ś1 K2 अभीप्सुना; K1 °त्सता; M5–7 °प्सतां.

90 With 90, cf. 3. App. I, (32), lines 69–72. G2 om. 90[ab] (cf. v. l. 87). — a) K1. 2. 4 मासं तु (for मासर्तु-). Ś1 K2 Bom. ed. -परिवर्तकेण (for °केन). — b) Dn4 रात्र- (for रात्रि-). K1. 2. 4 M1. 5–7 -दिनेंधनेन (for -दिवे°). — c) Bo D7 G2. 3. 6 स्वधर्म- (for स्वकर्म-). M1. 5 (*inf. lin.*). 6. 7 -पर- (for -फल-). K4. 6. 7 V1 Bo. 6. 8. 9 Dn1. n4 Ds D2–5. 7–9 T1 G2. 3. 6 -साक्षिकेन; B7 -रात्रिकेन (for -साक्षिकेण). — d) M1. 7 कालं (for कालः).

91 = (var.) Hitopadeśa 2. 9. — a) Dn4 धनेव (for धनेन). G3 किंचिन् (for किं यन्). K7 D4 यत्र ददाति; T1 G1 न ददाति (for यन्न ददाति). — b) D7 यं न; G3 यत्तु (for येन). K6 V1 B6–9 Da3. a4 Ds1 D2. 3. 8 editions रिपुं; Bo Dn1. n4 Ds2 G2 रिपुर् (for रिपून्). Dn1 Ds2 G2 बाध्यते. K7 D4. 9 यत्र रिपून्प्रबाधते. — c) D5 यन्न च (for येन न). — d) K6 G2 यो नि-; B6 (marg. as in text) यत्र; Da3. a4 यत्रि-; Dn1 Ds1 येन (for यो न). K6. 7 D4. 9 यतेंद्रियो (for जितेन्द्रियो). D5 भवेत् (for वशी).

92 Before 92, Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 ins. भीष्म उवाच. — a) M1. 5–7 इति (for इदं). — b) B8 (marg.) G2 हितयुक्तं; Da4 दिनमुक्तं; D5 ज्ञेय° (for हित°). K2 निपश्य; Da4 निशाम्य (for निशम्य). K7 D4. 9 च; D5. 7 T2 G1 तत् (for तु). — c) B8 परिष्वज्य (for °त्यज्य). G3 शुकोगात्संपरित्यज्य. — d) Ś1 K1. 4 Bo. 6. 7 Da3. a4 Dn1. n4 Ds D2. 3. 8 Cn (gloss: मोक्षोपदेष्टारम्) -दैशिकं; K2 -दैविकं; K6 G3 -देशिकः; D5. 7 -दर्शकं; T1 G6 -देशतः; G2 -दर्शिकः (for -देशिकम्).

Colophon. D6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* Ś1 K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T G1–3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K2 B9 Ca यावकाध्यायः; K1 यावकाख्यायः; K4. 6 V1 Da3. a4 Ds पावकाध्यायः; K7 ध्यातयाध्यायः; Bo. 6. 7 पाचकाध्यायः; B8 पावकाध्यायोत्क्रमः; Dn1 पावकाध्यापनं; Dn4 D2. 3 Cn (gloss: पावकस्य धर्मस्य अध्ययनम् । यद्वा, चित्तशोधकाध्ययनम्) पावकाध्ययनं; D8 शुकानुध्यापनं; D4. 9 ध्यातव्याध्यायः; D7 T1 G1. 6

# ३१०

C. 12. 12186
B. 12. 324 (3). 1
K. 12. 331. 1

युधिष्ठिर उवाच ।

कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तस्तन्मे ब्रूहि पितामह ॥ १
कस्यां चोत्पादयामास शुकं व्यासस्तपोधनः ।
न ह्यस्य जननीं विद्म जन्म चाग्र्यं महात्मनः ॥ २
कथं च बालस्य सतः सूक्ष्मज्ञाने गता मतिः ।
यथा नान्यस्य लोकेऽस्मिन्द्वितीयस्येह कस्यचित् ॥ ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ ४
माहात्म्यमात्मयोगं च विज्ञानं च शुकस्य ह ।
यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ॥ ५

भीष्म उवाच ।

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६
तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव ।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ॥ ७
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव सिद्धिं प्राप्नोति मानवः ॥ ८
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
योगस्य कलया तात न तुल्यं विद्यते फलम् ॥ ९

---

M1. 5–7 शुकानुशासनं; G2 वेदव्यासशुकप्रसंगः; Cnp याचकाध्ययनं. — *Adhy. no.* ( figures, words or both ): B8 148; Dn1 147; Dn4 Ds2 G3 145; Ds1 G1 M1. 6. 7 143; D8 142; T1 G6 144; T2 157; G2 159; M5 180. — *Śloka no.:* Da4 95; Dn1. n4 92; D8 94.

☞ After this adhy., all N MSS. ( D6 [ second time ] missing: K3. 5 B1–6 Da1. a2 Dn2. n3 D1 absent ) and of S MSS. G2 alone ( G4. 5 M2–4 absent ) repeat 12. 174, in the Crit. App. of which are included the v. l. from the repeating MSS.

## 310

☞ This adhy. is missing in D6 ( cf. v. l. 12. 283. 15 ).

1 [b]) K7 D9 सुतो ( for शुको ). K4 Bo. 7 यज्ञे; K7 Ds2 D4. 5. 7. 9 जातो; Ds1 जातौ ( for जज्ञे ). D5. 7 महात्मनः ( for °तपाः ).

2 [b]) G2 तपोनिधिः ( for °धनः ). — [c]) Ś1 K1. 2 च ( for हि ). V1 B8 D9 ( marg. ) T G1–3. 6 M1. 5–7 विद्मो; B7 ( also as in text ) Da4 Dn4 D5. 7 विप्र; D4 विग्र ( sic ) ( for विद्म ). — [d]) D4 वाङ्यं; G3 M1. 6–7 चास्य ( for चाग्र्यं ).

3 [a]) D7 तु ( for च ). K6 M1. 7 ततः ( for सतः ). — [b]) K3. 4 B8 D4 सूक्ष्मज्ञान°. K6 कृता; T G2. 3. 6 M1. 5–7 रता; G1 नता ( for गता ).

4 [a]) Ś1 K1. 2. 4 संश्रोतुं ( for [अ]हं श्रोतुं ). — [b]) K4 महात्मने; V1 Bo. 8 Da4 Dn1. n4 Ds D2. 3. 8 °मते ( for °द्युते ). — [c]) Ś1 K1. 2 च ( for हि ). D7 भूतम् ( for तृप्तिर् ).

5 [a]) K1. 2 Da4 महात्म्यम्; K6 माहात्मम्. K7 आत्मयोगञ्च ( for °योगं ). — [b]) G2 तथा जन्म ( for विज्ञानं च ). K6 B7. 9 Da3. a4 D5 G1. 2 च; K7 D4. 9 यत् ( for ह ). — [c]) Ś1 K1. 2 यथार्थम्; Ds1 यदावद् ( sic ) ( for यथा° ). K1 T1 आनुपूर्वेण; K2. 4. 6. 7 V1 Bo. 6. 7. 8 ( orig. ) Da4 Dn4 Ds D2–5. 7–9 G6 अनुपूर्वेण; Dn1 G1 अनुपूर्व्येण ( for आनुपूर्व्येण ).

6 = 3. 133. 12; Manu. 2. 154. — [b]) K4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T G1–3. 6 न वित्तैर्न च बंधुभिः. — [c]) T2 च क्रियते ( hypermetric ) ( for चक्रिरे ). — [d]) K7 D4. 9 वै ( for नो ). ❀ Ca: अनूचानः, गुरुमुखादधीतसाङ्गवेदः ॥ C8: षडङ्गवेदाध्यायी परेषामध्यापकश्च । ❀

7 [a]) K2 पूर्वं ( for सर्वं ). — [b]) M1. 5–7 मा ( for मां ). D5. 7 यन्मां त्वं परिपृच्छसि.

8 [b]) K7 V1 Bo. 6 ( marg. as in text ). 7. 8 ( marg. as in text ). 9 Dn1. n4 Ds D2–4. 8. 9 अर्च्छति; Da3. a4 अर्हति; D5. 7 आर्च्छति; M7 ऋच्छतु ( for °ति ). T2 [अ]संशयः. K2 G3 दोषपृच्छति ( G3 °त्य- ) संशयं ( sic ). — [c]) M6 तानेव ( for तान्येव ). — [d]) K1. 4 Dn1. n4 D3. 8 आप्नोति ( for प्रा° ).

अत्र ते वर्तयिष्यामि जन्मयोगफलं यथा ।
शुक्लस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः ॥ १०
मेरुशृङ्गे किल पुरा कर्णिकारवनायुते ।
विजहार महादेवो भीमैर्भूतगणैर्वृतः ॥ ११
शैलराजसुता चैव देवी तत्राभवत्पुरा ।
तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनः प्रभुः ॥ १२
योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ १३
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चाभिभो ।
वीर्येण संमितः पुत्रो मम भूयादिति स्म ह ॥ १४
संकल्पेनाथ सोऽनेन दुष्प्रापेणाकृतात्मभिः ।
वरयामास देवेशमास्थितस्तप उत्तमम् ॥ १५
अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः ।
आराधयन्महादेवं बहुरूपमुमापतिम् ॥ १६
तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा ।
लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह ॥ १७
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ ।
मरुतो मारुतश्चैव सागराः सरितस्तथा ॥ १८

C. 12. 12175
B. 12. 324(3).18
K. 12. 331. 18

---

9 [b]) M1 वाजिपेय-. Da3. a4 -शतानि (for -शतस्य). T1 G6 वा (for च). — [d]) D5. 7 परं (for फलम्).

10 [a]) Ś1 K1. 2. 4. 6 वर्णयिष्यामि (for वर्त°). — [b]) Ś1 K1. 2. 4 जंतोर्; M1. 5–7 यन्मा (sic) (for जन्म-). T1 जन्मयोगं. K7 B6 (marg. as in text). 7–9 Da3. a4 D4. 5. 9 T G1. 3. 6 -बलं (for -फलं). K4. 7 V1 B8 (marg.). 9 Dn1. n4 D4. 5. 7–9 T G1–3. 6 M1. 5–7 तथा (for यथा). — [d]) Da4 देवी तत्र भवत्पुरा (cf. 12[b]).

☞ Adhy. 12. 310. 10—12. 320 are repeated (adhy. 310–13 verbally and 314–20 in substance) in the Bṛhan-Nāradīya P., I 58. 2[c]–62[d]. The v. l. to the text accepted in the Crit. Ed. for the entire episode will be found in Appendix II No. 7.

11 [b]) B8 (marg. as in text) कर्णिकारवनं प्रति; Da4 °वनायुतेः; G2 °वनेषु वै. — [d]) K2. 4 भौमैर्; G3 भूमौ; M1. 5–7 भीमो (for भीमैर्). B6 (marg. as in text) भूतशतैर् (for °गणैर्). G2 नृप; M7 वृतं (for वृतः).

12 [b]) B8 (marg.) देशे (for देवी). M1. 5–7 तदा (for पुरा). — [d]) K6 Bo. 8 Dn1. n4 D8 D2. 3. 8 तदा; B6. 7. 9 Da3 पुरा (for प्रभुः). Da4 पुत्रार्थं कुरुसत्तम (= 13[d]).

13 [a]) D4 आदिश्य (for आविश्य). ❁ Cn: योगेनात्मानमाविश्य, अन्तर्हृदये इन्द्रियाणि निरुध्येत्यर्थः। ❁ — [b]) K7 योगधर्मः; G1 (*sup. lin.*) योगधर्म (for योगधर्म-). — [d]) K7 D4. 5. 7. 9 राजसत्तम; V1 B6 (marg.). 8 मुनिसत्तमः (B6 °म).

14 [a]) Ś1 K1. 2 तथा (for अपां). — [b]) K7 V1 Bo. 6. 7. 9 अंतरीक्षस्य. Ś1 K1. 2 चाभिभोः; K2. 4 चाभितः; K7 D4. 9 चाप्ययं; V1 Bo. 6–9 Da3. a4 Dn1 D8 D2. 3. 8 वा विभो (Da4 °भोः); Dn4 चाधिभो; D5 चांभसां; D7 चाभयं; G1 चाहिभो (for चाभिभो). — [c]) K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 धैर्येण (for वीर्येण). Ś1 K1 G1 M8 संमतः (K1 °ताः); K2 संपतः (for संमितः). — [d]) K2 V1 Da4 इति सह; Dn4 Ds1 इति स्म हे; T2 इति स्म हा (for इति स्म ह).

15 [a]) K2 सोमेण; K6 Da4 Dn1. n4 Ds2 D2. 3. 8 योगेन; K7 V1 Bo. 8 T G1–3. 6 मौनेन; M1. 5. 7 सौतेन (for सोऽनेन). B7 संकल्पे मानसोनेन. — [b]) K7 D4. 9 दुःप्रापेन. M1. 8 कृतात्मभिः. K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 दुष्प्रापमकृतात्मभिः. — [c]) K7 D4. 5. 7. 9 पूजयामास; G8 वार°; Ca (gloss: वरं प्रार्थयामास) वर° (as in text). — [d]) Dn4 तपम् (for तप).

16 [a]) Da4 आतिष्ठन्. K2 मारुतः हार (sic); Da4 G1 मारुताहारा (G1 °र). — [b]) K4. 6. 7 Da4 समः (for समाः). — [c]) T1 G3. 6 समाराध्य (for आराधयन्). — [d]) D5. 7 उमाधवं (for °पतिम्).

17 [a]) K3 अत्र (for तत्र). — [b]) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 राजर्षयश् (for देव°). G2 च ये (for तथा). — D7 om. (hapl.) 17[c]–18[d]. — [c]) K1. 4 लोकपालश्च. Ś1 K1. 2 लोकाश्च; G2 लोकेश (for °शं). — K2 om. 17[d]–20[a]. — [d]) B9 बहुभिः (for वसुभिः).

18 K3 D7 om. 18 (cf. v. l. 17). K4 om. 18[c]–19[b]. — [c]) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8

C. 12. 12176
B. 12. 224(3). 19
K. 12. 331. 19

अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ ।
विश्वावसुश्च गन्धर्वः सिद्धाश्चाप्सरसां गणाः ॥ १९
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम् ।
धारयाणः स्रजं भाति ज्योत्स्नामिव निशाकरः ॥ २०
तस्मिन्दिव्ये वने रम्ये देवदेवर्षिसंकुले ।
आस्थितः परमं योगमृषिः पुत्रार्थमुद्यतः ॥ २१
न चास्य हीयते वर्णो न ग्लानिरुपजायते ।
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ॥ २२
जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः ।
प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ २३
मार्कण्डेयो हि भगवानेतदाख्यातवान्मम ।
स देवचरितानीह कथयामास मे सदा ॥ २४
ता एताद्यापि कृष्णस्य तपसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ २५
एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् ॥ २६
उवाच चैनं भगवांस्त्र्यम्बकः प्रहसन्निव ।
एवंविधस्ते तनयो द्वैपायन भविष्यति ॥ २७
यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम् ।
यथा च खं तथा शुद्धो भविष्यति सुतो महान् ॥ २८

---

वसवो; D5 मरुतौ (for मरुतो). K6 V1 Bo. 6–9 Da3 Dn1. n4 Ds D2. 3. 8 मरुतश्च; K7 D4. 9 मारुताश्च; Da4 भरतश्च; D5 वसवश्च (for मारुतश्च). T G1–3. 6 M1. 6. 7 मारुतो मरुतश्च (by transp.). — d) M1. 5–7 सरितः सागरास् (by transp.). K1 सागरः. G3 सुरभिस् (for सरितस्).

19 K3 om. 19 (cf. v. l. 17). K4 om. 19ab (cf. v. l. 18). K7 D9 transp. 19b and 19d. — c) Da4 D5 M1. 7 गंधर्वाः. — d) Bo. 7. 8 (marg.) Da3. a4 Dn1. n4 Ds D2. 3. 8 अप्सरस्. Bo Dn1. n4 Ds D2. 3. 8 तथा (for गणाः).

20 K3 om. 20a (cf. v. l. 17). — a) B3 ततो; D4 तव (for तत्र). D5 देवो (for रुद्रो). — b) G3 स्रजः (for शुभाम्). — c) Ś1 K1. 2. 4. 7 Da3. a4 Dn1. n4 Ds D2. 4. 8. 9 T G1–3. 6 धारयानः (K4 °याना; T1 G6 °यं च; G3 °यन्तः) (for °याणः). K7 सृजं (for स्रजं). — d) Ś1 K1. 2. 4 शरदि; K7 ज्योतिस्नाम् (sic) (for ज्योत्स्नाम्).

21 a) D9 दिव्य- (for दिव्ये). Da4 Dn4 वरे रम्ये; G2 मनोरम्ये (for वने रम्ये). — b) K1 देवे; K4 Da3 lacuna (for देव-). — d) K3 उदितः; K6 V1 Bo. 6–9 Da3. a4 Dn4 Ds D2. 3. 5. 8 M1. 5–7 अच्युतः; Dn1 T1 G2. 3. 6 अच्युत; D4 उद्दतः (sic); D9 उद्यत; T2 G1 अप्युत (for उद्यतः).

22 a) K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 प्राणो; D7 वर्णे; G3 वक्त्रं (for वर्णो). — b) T1 G3. 6 न विरूपं हि जायते. — c) G1 सदुष्टाम् (for त्रयाणाम्).

23 a) D5. 7 G3 प्रजाश्च; M7 जटां (for जटाश्च). — b) D5. 7 -शिखोपमं. — c) Bo T1 G1. 3. 6 प्रज्वलंतः. — d) D5. 7 मुक्तस्य (for यु°). Bo. 8 (marg.) Dn1. n4 Ds D2 -तेजसा (for -तेजसः).

24 a) K1 माकंडेये (sic); K2 माकंडेयो. D5. 7 [ऽ]पि (for हि). — c) B7 तदेव (for स देव-). — d) D8 सर्वदा; T1 G3. 6 मे तथा; T2 G1. 2 M1. 5–7 मे तदा (for मे सदा).

25 a) Ś1 K1. 2. 4 तावताद्यापि; K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 T2 G1 एता अद्या(B8 °स्या)पि; D5. 7 त एवाद्यापि; T1 G3. 6 अतोद्यापि च (for ता एताद्यापि). D5. 7 कृत्स्नस्य (for कृष्णस्य). — b) T2 G1. 2 M1. 5–7 तेजसा (for तपसा). V1 B8 (marg.) तत्र (for तेन). K7 दीपिता; G2 पीडिताः (for दीपिताः). — c) K1. 7 अग्निवर्ण-. D5. 7 द्विपास् (for जटास्). — d) Bo प्रकाशंति.

26 a) Da3 एवंविद्येन (for एवंविधेन). — c) Da4 महेश्वर-. — d) D7 T G1. 3. 6 मतिमान् (for मनसा). Da4 मतिः; Ds1 (by corr.) D8 गतिं (for मतिम्). — After 26, G2 M1. 5–7 Kumbh. ed. ins.:

789* ततस्तस्य महादेवो दर्शयामास साम्बिकः ।

27 Before 27, B8. 9 ins. महेश्वर उवाच. — a) K4 Da4 Dn4 Ds1 D2. 3. 8 चैवं; D5 [ए]नं च (by transp.). — c) ❀ Cv : एवंविधः, यथा अहमेवंविधः । ❀

28 a) B7 यदा; Da3. a4 यः स (for यथा). Da4 तु; G2 [अ]पि (for हि). — b) K6 वायुर् (for भूमिर्). K6 Da3. a4 जलं यथा (by transp.). — c)

तद्भावभावी तद्बुद्धिस्तदात्मा तदपाश्रयः ।
तेजसावृत्य लोकांस्त्रीन्यशः प्राप्स्यति केवलम् ॥ २९

इति श्रीमहाभारते शान्तिपर्वणि दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

## ३११

भीष्म उवाच ।
स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः ।
अरणीं त्वथ संगृह्य ममन्थाग्निचिकीर्षया ॥ १
अथ रूपं परं राजन्बिभ्रतीं स्वेन तेजसा ।
घृताचीं नामाप्सरसमपश्यद्भगवानृषिः ॥ २
ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः ।
अभवद्भगवान्व्यासो वने तस्मिन्युधिष्ठिर ॥ ३
सा च कृत्वा तदा व्यासं कामसंविग्नमानसम् ।
शुकी भूत्वा महाराज घृताची समुपागमत् ॥ ४
स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् ।
शरीरजेनानुगतः सर्वगात्रातिगेन ह ॥ ५
स तु धैर्येण महता निगृह्णन्हृच्छयं मुनिः ।

C. 12. 12192
B. 12. 325(4). 6
K. 12. 332. 6

K7 D4.5.9 खं च ( by transp. ); D7 T G1–3.6 M1.5–7 [आ]काशस् ( G1 °शं ). D5 यथा ( for तथा ). T1 G3.6 ऊर्ध्वं ( for शुद्धो ). — d) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 भविता ते ( for भविष्यति ). K7 D4.5.9 तव ( for महान् ).

29 a) Ds1 D5.7 G2 -भाविता ( for भावी तद्- ). K7 तच्छुद्धिस् ( for तद्बु° ). ❀ Cn: तद्भावभावी, तद्भावं, ब्रह्म अहमिति भावं, आशयं भावयतीति तद्भावभावी । ❀ — b) Ś1 K1.2.4 तथात्मा ( for तदा° ). K6 V1 B8 ( marg. ).9 Da3.a4 D9 तदु( V1 °द्य )पाश्रयः ( for तदपा° ). — c) Ś1 K1.2.4 तस्य ( for [आ]वृत्य ). K6 om. स्त्रीन्. — d) Ś1 K1.2.4 D5.7 T1 G3.6 प्राप्स्यसि. K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 ते सुतः ( for केवलम् ).

Colophon. D6 missing: K3.5 B1–5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* Ś1 K1.2.4.6.7 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2–5.7–9 T G1–3.6 M1.5–7 मोक्षधर्म. — *Adhy. name:* Ś1 K1.2.4.6 V1 B0.6.7.9 Da3.a4 Dn1 D8 D2.3.7.8 T1 G6 M1.5–7 शुकोत्पत्तिः; K7 B8 D4.5.9 शुकोत्पत्तौ व्यासवरप्राप्तिः ( B8 °लम्भः ). — *Adhy. no.* ( figures, words or both ): K6 48; B6 140; B7 G3 146; B8 250; Dn1 149; Dn4 Ds3 147; Ds1 D8 G1 M1.6.7 144; T1 G6 145; T2 158; G2 161; M5 181.

## 311

☞ This adhy. is missing in D6 ( cf. v. l. 12. 283. 15 ).

1 a) Da4 स लब्ध्वा; D7 T1 G3.6 लब्धवान्. M5 वरदाद् ( for परमं ). — b) Da1 स्वरं ( for वरं ). — c) V1 B3 ( orig. ) स ततो; B5 ( orig. ).7.8 ( marg. ) Da3.a4 D8 रहिते; B9 D7 T G1.3.6 तु ततो ( for त्वथ सं- ). K4.7 B0 Dn1.n4 D8 D2–4.8.9 G2 M1.5–7 अरणी सहिते ( K7 सहिता; D4.9 G2 M1.5–7 सहितं ) गृह्य; K6 °णीव हि ते गृह्य. ❀ Cn: अरणी द्वे अधरोत्तरे सहिते मिथुनरूपे । ❀

2 a) K7 रूप- ( for रूपं ). — b) K7 D4.5.7.9 T1 G3.6 M1.6.7 बिभ्रती; Dn4 बिभ्रंति ( for बिभ्रतीं ). — c) K7 Da4 D4.5.9 G3 घृताची- ( Da4 °चि- ). — d) Ś1 K1.2.4 ददर्श; G1 अपश्यन् ( for °श्यद् ). V1 अपश्यन्स महानृषिः; D7 पश्यन्स भगवानृषिः.

3 Da4 reads 3ab twice. — a) K1 अप्सरसां. Da4 ( both times ) ऋषिमप्सरसं दृष्ट्वा ( sic ).

4 a) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 G2 दृष्ट्वा ( for कृत्वा ). — b) Da3 lacuna; D4 कामं ( for काम- ). Ś1 K1 -संविघ्न- ( for -संविग्न- ). D7 -तेजसं ( for -मानसम् ). — c) B5 ( marg. ) स्तुकी ( sic ); Da4 पुकाद् ( sic ) ( for शुकी ). D3 G1.2 -भूता ( for भूत्वा ). — d) D7 T1 G3.6 घृताची सत्वरागमत्; T2 G1 °च्यप्सरसमुपागमत्; M6 °ची समवागमत्.

5 a) M7 तम् ( for ताम् ). K2 अप्सरसां. — b) K2 Da3.a4 रूपेन ( for °ण ). G2 [आ]येन ( for [अ]न्येन ). — c) B0 शारीरजेन ( for °जेन ). V1 D7 [अ]नुगतां; M1.6.7 °गतं ( for °गतः ). K1 शरीरजोजानुरतः ( sic ). — d) G3 M1.7 -गात्रादि- ( for -गात्राति- ).

C.12.12192
B.12.322[4].6
K.12.332.6

न शशाक नियन्तुं तद्व्यासः प्रविसृतं मनः ।
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ॥ ६
यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् ॥ ७
सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ॥ ८
शुक्रे निर्मथ्यमाने तु शुको जज्ञे महातपाः ।
परमर्षिर्महायोगी अरणीगर्भसंभवः ॥ ९
यथाध्वरे समिद्धोऽग्निर्भाति हव्यमुपात्तवान् ।
तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा ॥ १०
बिभ्रत्पितुश्च कौरव्य रूपवर्णमनुत्तमम् ।
बभौ तदा भावितात्मा विधूमोऽग्निरिव ज्वलन् ॥ ११
तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाभ्येत्य स्नापयामास वारिणा ॥ १२
अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह ।
पपात भुवि राजेन्द्र शुकस्यार्थे महात्मनः ॥ १३

---

D4. 5. 7. 9 च (for ह).

6 a) B0. 6. 7 वीर्येण; Da4 धुर्येण (for धैर्येण). — b) K6. 7 निगृह्णा(K7 °ह्ण)न्; Da3. a4 न्यगृह्णाद्; G2 अगृह्णाद् (for निगृह्णन्). B0 हृदयं (for हृच्छयं). Ds1 निगृह्य मनसा मुनिः. — c) Ś1 K1. 2. 4 D5 T G1. 3. 6 तं; D7 तां (for तद्). — d) K4 प्रविसृक्षं; K6 B6 परिसृतं; G2 संप्रसृतं (for प्रवि°). B8 (marg. as in text) व्यासः प्रसृतमानसः. — e) K1 भवित्वाच्; T G1–3 भावितात्च् (for °त्वाच्). Ś1 K7 B6 (marg. as in text) D4. 5. 9 भाव्यस्य (for भावस्य). — f) D2 वपुशा. V1 B0 कृतः; Ds1 D2 हृतः; D7 भृतः; D9 G1 M5 हृतं; M1. 7 वृतं (for हृतः). T1 G6 घृताच्यां पुरुषो भृतः.

7 a) Ś1 K1. 2 यत्नान्नियच्छता तत्तु. — b) K6 Da4 G2 पुनरग्नि-; Ds2 मुनिराग्नि-; D5. 7 मुनिस्तस्य; M1. 5–7 मन्नतोग्नि- (for मुनेरग्नि-). — c) K1 अरण्यम्; Da4 आरण्याम् (for अर°). — K7 repeats 7d after 8a. — d) D7 T1 G1 तत्र (for तस्य). D7 T G2. 3. 6 शुक्लम् (for शुक्रम्).

8 a) M1. 7 महता (for मनसा). — After 8a, K7 repeats 7d. — b) T2 तस्यैव (for तथैव). Dn4 -सत्तम; D8 -सत्तमं. — c) Da3. a4 Dn4 D2. 8 T2 M1 अरणी (for °णीं). K6 V1 B6. 7 Da3. a4 विप्रर्षिस्; G3 महर्षिस् (for ब्रह्म°). K7 D4. 5. 7. 9 ममंथारणिमेवाथ. — d) K7 तस्या; G2 तस्माज्; M7 तस्य (for तस्यां). D7 G3 गुरोर् (for शुको). B0 नृपः.

9 a) D7 T G1. 3. 6 M1. 5–7 शुक्ले (for शुक्रे). K2 निमथ्यमाने. K7 B0. 8 Da4 Dn4 Ds1 D2–4. 8. 9 T G1. 3. 6 M5 स; Ds2 न; D7 हि; M1. 6. 7 च (for तु). G2 निर्मथ्यमानेन च स. — D8 om. 9b–10c. — b) Da4 शुक्रो (for शुको). K4 यज्ञे (for जज्ञे). G1 महातपः.

10 D8 om. 10abc (cf. v. l. 9). — a) Ś1 K1. 2. 4 यथैव हि; M1. 7 यथाध्वरेत्. K6 B7 समृद्धो; Da3 समीद्धो; D5 समिद्धै. — b) D7 हुता; G3 हुतं (for भाति). K6 V1 B7 D5 D2 उदा(V1 B7 °पा)हरन्; K7 D4. 9 उपाददत्; B0. 6. 8 (marg.). 9 Da3. a4 Dn1. n4 D3 उदा(B8 [orig.] °पा)वहन्; D6 उपेयिवान्; T2 अवाप्तवान् (for उपात्त°). G2 भाति हव्यमुखात्तदा. — c) K2 D7 यथारूपः (for तथा°). B0 यज्ञे; B8 (marg.) भाति (for जज्ञे). — d) K7 प्रज्वालन्.

11 a) Ś1 K1. 2. 4 चित्रं (for पितुश्च). — b) K2 रूपवर्णम्; V1 D7 T1 G2. 6 रूपं वर्णम्. — c) D4 om. (hapl.) from भाविता up to तदा (in 12c). — d) G2 M1. 5–7 [उ]त्थितः (for ज्वलन्). K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D3 D2. 3. 8 विधूम इव पावकः.

12 D4 om. up to तदा (cf. v. l. 11). — a) K1 गंगां. D7 सरितः (for °तां). — b) D5 मेरुशृंगे (for °पृष्ठे). B0 Da4 जनेश्वरः; Dn4 नरेश्वर; G1 मुने° (for जने°). — c) K6 सुरूपिणी. D7 श्रेष्ठ; T1 G3. 6 श्रेष्ठं (for [अ]भ्येत्य). — d) K2. 4 B6. 7 Da3. a4 Ds1 D2. 5. 8 स्नपयामास; B9 Dn1 Ds2 D8 तर्प°; Dn4 स्नपसा° (for स्नापया°). Da4 वारिणी.

13 a) K1 अंतरिक्षं; K7 V1 B0. 7–9 °रीक्षाच्. D5 गगनाच्च महाराज. — b) K1. 2 Da4 दंड-; M7 दंडं (for दण्डः). Ś1 K1. 2 महत्; K7 B8 (marg. as in text) तदा; Da4 स ह; D4. 5. 9 तथा; T2 च सा (for च ह). — c) K6. 7 B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 D3 D2. 3. 8 भूमिं; B3 (orig.) भूमौ (for भुवि).

14 a) K2 जेगीषंती; K7 M1. 7 जैगीषंते; Da4 योगी°; D7 G3 गेगी°; G1 खे गी°; G2 जगी° (for

जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयश्चैव प्रावाद्यन्त महास्वनाः ॥ १४
विश्वावसुश्च गन्धर्वस्तथा तुम्बुरुनारदौ ।
हाहाहूहू च गन्धर्वौ तुष्टुवुः शुकसंभवम् ॥ १५
तत्र शक्रपुरोगाश्च लोकपालाः समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ १६
दिव्यानि सर्वपुष्पाणि प्रववर्षात्र मारुतः ।
जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् ॥ १७
तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥ १८
तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनम् ।
ददौ कमण्डलुं प्रीत्या देववासांसि चाभिभो ॥ १९
हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणमवर्तन्त शुकाश्चाषाश्च भारत ॥ २०
आरणेयस्तथा दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी व्रतचारी समाहितः ॥ २१
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महाराज यथास्य पितरं तथा ॥ २२
बृहस्पतिं तु वव्रे स वेदवेदाङ्गभाष्यवित् ।
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥ २३

C. 12. 12110
B. 12. 325[4]. 24
K. 12. 332. 23

---

जेगी°). K1 स; K6 V1 B9 Da3. a4 D8 च (for स्म). —c) Ś1 K1. 2 देवैर् (for देव-). K3 -द्वंद्वभयश् (for -दुन्दु°). —d) K1. 2 V1 T2 G1 प्रवा:द्यंत; K7 Ds1 प्रावाद्यंते. K7 महास्वना; Da4 °स्वनां; D7 T G1-3. 6 M1. 5-7 सहस्रशः (for महास्वनाः).

15 a) Da4 गंधर्वास्. —b) K3 Dn4 तुंबुर; K8 Dn1 D9 तुंबरु-; Da4 D4 तुंबर- (for तुम्बुरु-). D7 T2 G1. 3 तथा नारदपर्वतौ. —c) K6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2, 3. 5. 7. 8 T G1-3. 6 हाहाहू (Da4 Ds1 °हु )हूश्; K7 D4. 9 °हूहौ (for °हूहू). D7 गंधर्वस्; T1 G3. 6 °र्वास् (for °र्वौ). —d) B9 तुंबुरुः (for तुष्टुवुः).

16 a) D7 T1 G1-3. 6 ततः (for तत्र). K3 D4 T2 G3 M1 शुक्र- (for शक्र-). —d) K6 Da4 [ऽ]पि वा; D3 (marg.) विदुः (for ऽपि च).

17 a) K7 D9 दिव्यानि पुष्पवर्षाणि. —b) K6 V1 Bo. 6-9 Da3. a4 Dn1 D8 D2. 3. 8 च (for [अ]त्र). Dn4 प्रवर्षय च मारुतः; T1 G3. 6 ववर्षात्र च मा°. —c) T1 जंगमः. K6 V1 Bo 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 8 जंगमाजंगमं चैव; D7 जंगमः स्थावरश्चैव; G2. 3 °मस्थावरं चैव.

18 a) ❀ Cn: महात्मा, महादेवः । ❀ —c) Da4 lacuna; Dn4 जातमात्र- (for °मात्रं). K6 om. पुत्रं. —d) G1 M7 विधिनोपनयत्तथा. ❀ Cn: उपानयत्, स्वशिष्यं कृतवान् । ❀

19 c) K1 कमंडलं; K2 °डुलं; Da4 °डलौ; Dn4 °डलु (for कमण्डलुं). —d) Ś1 K1. 2 T1 G2. 3. 6 देवा; D5 दिव्यं (for देव-). Ś1 K1. 2. 4 चामितः; Bo. 6-9 Da3 Dn1. n4 D8 D2. 3. 5 वा त्रिभो; Da4 D4 श्रा त्रिभोः; D7 चाद्भुभौ; D8 चा विभौ; D9 चाभिभोः (for °भो).

20 a) D6 शित- (for शत-). —D2 om. 20c–21b. —c) D7 T G1. 3. 6 अकुर्वत; G2 प्रकुर्वत (for अवर्तन्त). —d) Bo. 8 चासाश्; Da4 चाश्वश्; M1. 7 चाषश् (for चाषाश्). G2 भाषते (for भारत). G3 शक्राश्चक्राश्च भारत.

21 D2 om. 21ab (cf. v. l. 20). —a) K7 D8 D4. 5. 9 आरणेयं; Da4 °ण्येयस् (for °णेयस्). Ś1 K1. 2 D5. 7 तदा; K4. 6 V1 Bo 6-9 Da3. a4 Dn1 D8 D8. 8 ततो (for तथा). G1 दिव्या (for दिव्यं). Dn4 आरसोपस्ततो दिव्यं. —b) Ś1 K1. 2. 7 D4. 5. 9 महामुनिः (for °द्युतिः). —c) Da4 अत्र (for तत्र). —d) K6 B6 D8 D7 T1 G3. 6 ब्रह्मचारी; G2 विवृतश्च; M1. 5-7 व्रतधारी (for °चारी).

22 a) Da4 -मात्रे (for -मात्रं). K7 G1 तं वेदा; B6 Ds1 वेदास्तं (by transp.); Dn4 च वेदाः; Ds2 देवास्तं. —c) Da4 महाराजः; G1 °राजा. —d) D7 यथा स्वे; T2 G1. 3 यथा स्व- (for यथास्य). B8 G8 पितरस्.

23 a) T1 G2. 3 बृहस्पतिस् (for °स्पतिं). Ś1 K1. 2 स; K4. 6 V1 Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 8 च (for तु). ❀ Cn: स्वयं भातवेदोऽपि शिष्टाचारपालनार्थं बृहस्पतिं गुरुं चकार । ❀ —b) K7 D4. 9 -भाष्यकृत्; V1 -भाष्यवान् (for °वित्). —d) Da3. a4 अन्व- (for अनु-). Ś1 K1. 2 धर्ममेवान्वचिंतयत्; D4 धर्मं वानुविचिंतयन्.

C. 12. 12210
B. 12. 325(4). 24
K. 12. 337. 24

सोऽधीत्य वेदानखिलान्सरहस्यान्ससंग्रहान् ।
इतिहासं च कार्त्स्न्येन राजशास्त्राणि चाभिभो ॥ २४
गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः ।
उग्रं तपः समारेभे ब्रह्मचारी समाहितः ॥ २५
देवतानामृषीणां च बाल्येऽपि स महातपाः ।
संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ॥ २६
न त्वस्य रमते बुद्धिराश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ २७

इति श्रीमहाभारते शान्तिपर्वणि एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

## ३१२

भीष्म उवाच ।
स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः ॥ १
मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे ।
यथा मे मनसः शान्तिः परमा संभवेत्प्रभो ॥ २
श्रुत्वा पुत्रस्य वचनं परमर्षिरुवाच तम् ।

---

24 a) K6.7 V1 Bo.6-9 Da3.a4 Dn1 D8 D2-5.7-9 T G1-3.6 सोधीत्य निखि( K7 D4.9 सखि·; D5.7 T G1.3.6 चाखि·; G2 सक )लान्वेदान्. — b) D5 समंत्रकान् ( for ससंग्रहान् ). — c) Da4 Dn4 Ds1 D4 कार्त्स्नेन ( for कार्त्स्न्येन ). G2 इतिहासांश्च शास्त्राणि. — d) Ś1 K1.2.4 V1 D8 वेद·; K7 D4.5.7.9 T G1.3.6 धर्म· ( for राज· ). D5 ·शास्त्रं च ( for ·शास्त्राणि ). Ś1 K1.2.4 चाभितः; V1 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.3.5.7.8 वा विभो; D9 चाभिभोः ( for चाभिभो ).

25 b) K1 समावृत्तौ. B8 ( marg. ) महामतिः; G2 °श्रुतिः ( for °मुनिः ). — c) Dn4 दुर्गं ( for उग्रं ). Da3.a4 स आरेभे ( for समारेभे ).

26 a) G2 देवानां च ( for देवतानाम् ). — b) D7 T G1.3.6 च; G2 स ( for ऽपि ). Ś1 K1.2.4.7 D4.9 G2 सु· ( for स ). — c) K1.2.6 D5.7 T1 G6 स मंत्रणीयो; K7 D4.9 संपूजनीयो; Dn1.n4 Ds1 सन्मंत्रणीयो; C8 ( gloss: गौरवेण संभावनीयः ) संमन्त्र° ( as in text ). K2.4 जन्यश्च; T G1.3.6 भृत्यश्च ( for मान्यश्च ). G2 सोद्वितीयो हि मान्यश्च. — d) G2 तदा ( for तथा ).

27 b) Da4 नराधिपः. — c) B6 ( marg. as in text ) [अ]गार्हस्थ्य·; Ds1 गार्हस्थ· ( for गार्हस्थ्य· ). — d) K7 ·धर्मेषु; B8 Ds3 ·धर्मार्थ· ( for ·धर्मानु· ).

Colophon. D8 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M1-4 absent. — *Sub-parvan:* Ś1 K1.2.4.6.7 V1 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.4.5.7-9 T G1-3.6 M1.5-7 मोक्षधर्म. — *Adhy. name:* Ś1 K1.2.4.6 V1 Bo.6-9 Da3.a4 Dn1 D8 D2.3.8 M1.5-7 शुकोत्पत्तिः; K7 D4.9 शुकजन्म; D5 शुकजनकसंवादः; T1 G6 शुकजनक( G6 °न )कथनं. — *Adhy. no.* ( figures, words or both ): K6 49; B7 G3 147; B8 151; Dn1 150; Dn4 Ds2 148; Ds1 G1 145; D8 T1 G6 146; T2 159; G2 162; M1.6.7 140; M5 182. — *Śloka no.:* Da4 25; Dn1 27; Dn4 28; Ds1 24; D8 26.

## 312

☞ This adhy. is missing in D6 ( cf. v. l. 12. 283. 15 ).

1 T1 om. the ref. — a) K7 D4 अनुचिंत्येव. — b) D8 अन्वगात् ( for अभ्य° ). — c) M1.5-7 आह ( for प्राह ). B9 Ds1 [अ]भिवंद्य ( for °वाद्य ). Ś1 K1.2 च शुकः; B8 पितरं ( for च गुरुं ). — d) K7 V1 B6 ( marg. ) D5.9 विनयानतः ( for °न्वितः ).

2 Before 2, B1.9 ins. शुक उवाच. — c) K7 B6.7.9 Da3.a4 येन; G2 यया ( for यथा ). K1 मनसा. — d) Ś1 K7.2.4 मुने; Da4 प्रभोः.

3 a) K6.7 Bo.6-9 Da3.a4 Dn1.n4 D8 D2-5.8.9 M1.5-7 तु ( K6 च ) वचः ( for वचनं ). — b) V1 B7.8 ( marg. ).9 Da3.a4 D5 ह ( for तम् ). — Before

अधीष्व पुत्र मोक्षं वै धर्मांश्च विविधानपि ॥ ३

पितुर्नियोगाज्जग्राह शुको ब्रह्मविदां वरः ।
योगशास्त्रं च निखिलं कापिलं चैव भारत ॥ ४

स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षविद्याविशारदम् ॥ ५

उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलेन विशेषतः ॥ ६

पितुर्नियोगादगमन्मैथिलं जनकं नृपम् ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ ७

उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः ।
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ॥ ८

आर्जवेणैव गन्तव्यं न सुखान्वेषिणा पथा ।
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः ॥ ९

अहंकारो न कर्तव्यो याज्ये तस्मिन्नराधिपे ।
स्थातव्यं च वशे तस्य स ते छेत्स्यति संशयम् ॥ १०

स धर्मकुशलो राजा मोक्षशास्त्रविशारदः ।
याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ॥ ११

एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः ।

C. 12. 12225
B. 12. 326(5). 12
K. 12. 333. 12

---

3cd, B8 ins. व्यास उवाच. — c) D7 T1 G1. 2. 6 M1. 5–7 अधीहि; T2 अथ हे (for अधीष्व). Ds2 पुत्रं; D5 पुत्रो (for पुत्र). — d) K2 धर्मांश्च; Da4 धर्मौ.

4 Before 4, B6. 8. 9 ins. भीष्म उवाच. — a) Ś1 K1. 2 निदेशाज् (for नियोगाज्). — b) K6 B8 (marg.). 9 Da4 M1. 5–7 धर्मविदां; V1 Bo. 6. 7. 8 (orig.) Da3 Dn1. n4 Ds D2. 3. 8 धर्मभृतां; D7 T G1–3. 6 वेदविदां (for ब्रह्म°). — c) D7 G2. 6 -शास्त्रेण; T1 -शास्त्रे च (for -शास्त्रं च). Da4 निखिले (for °लं). — d) D5 कपिलं.

5 a) K1 सुतं (for स तं). K6 B6. 8 (marg.). 9 Da3. a4 ब्रह्म-; V1 ब्रह्मया (for ब्राह्म्या). B7 स तं ब्रह्मश्रिता युक्तं. — c) D5 पुत्रो (for पुत्रं). K2 यथा (for यदा). — d) Ś1 K1. 2 -शास्त्र-; K4. 7 Bo. 6. 8 (marg. as in text) Da3 Dn1. n4 Ds D2. 3. 8 -धर्म- (for -विद्या-). M1. 6. 7 -विशारदः (for °रदम्).

6 b) K7 मैथिलेश्वरं; Da4 मिथिलेश्वरः. — Ś1 K1. 2 om. (? hapl.) 6c–7b. — c) K7 वक्षति. K6 मोक्षार्थें (for °र्थं). — d) K7 D4. 5. 9 अखिलेन (for निखि°). Bo. 8 Dn1. n4 Ds D2. 3. 8 निखिलं मिथिलेश्वरः.

7 Ś1 K1. 2 om. 7ab (cf. v. l. 6). Before 7, B8. 9 ins. भीष्म उवाच. — a) K6 B7. 9 Da3. a4 D5 पितुर्नियोगं ज(B7 D5 °गाज्ज)ग्राह; Bo. 6 (marg. as in text). 8 Dn1. n4 Ds D2. 3. 8 पितुर्नियोगमादाय (Bo °स्थाय; Ds1 °साद्य). — b) D7 G3 जगतां; G2 जगदां (for जनकं). K4. 7 V1 D4. 9 जनकं मि(K4 V1 मै)थिलं नृपं (K4 D4 °प); K6 B6. 9 D5 शुको धर्मविदां वरः (K6 °र); Bo. 8 Dn1. n4 Ds D2. 3. 8 जगाम मिथिलां नृप (Ds D8 °पं); B7 Da3. a4 शुको धर्मभृतां वरः. — c) D5. 7 प्रष्टुं धर्मवरिष्ठं वै.

8 a) D5. 7 T1 उक्तं च; D9 स उक्तो (for उक्तश्च). — b) Ś1 K1. 2 तथा; V1 Bo Da4 Dn1 Ds D3. 5. 7 यथा (for पथा). V1 B7. 8 गच्छति (for गच्छेति). T1 G3. 6 अविस्मयन्; T2 G1 °स्मयः (for °स्मितः). G2 पथा गच्छेन्न विस्मयं. — c) K4. 6. 7 V1 Bo. 6. 7. 9 Da3. a4 Dn3 Ds D2. 4. 5. 8. 9 T G1–3. 6 M1. 5–7 प्रभावे(Ds2 °गे)न; D7 °वो न (for °वेण). D7 om. (hapl.) from गन्तव्य up to णैव (in 9a). — d) V1 Bo. 6–9 अंतरीक्ष- (for °रिक्ष-). K6 अंतरीक्ष्यवरेण वै.

9 D7 om. up to णैव (cf. v. l. 8). — a) K2. 4. 6. 7 Bo. 6. 7 Da3. a4 Dn1 Ds D2. 4. 5. 8 T G1–3. 6 M1. 5–7 आर्जवेन (for °वेण). K6 D4. 5 इव (for एव). — b) K7 T2 G1 सुखान्वे(K7 °न्वि)षिणः; D7 °क्षिणः (for °षिणा). K2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 तथा; D4. 5. 9 यथा (for पथा). — c) Ś1 K1. 2. 4 न द्रष्टव्या; K7 G2 नन्वेष्टव्या; Ds2 मान्वे° (for नान्वे°). Ś1 K1. 2. 4 हि; T G1–3. 6 ते (for तु). — d) T2 विशेषो (for °षा). D7 G2 [अ]भि-; M1. 5–7 वि- (for हि). ❀ Cs: प्रसङ्गिनः, विघ्नप्रसङ्गकरा इत्यर्थः । ❀

10 b) K6 प्राज्ये; D7 G3 याम्ये; G2 याह्ये (sic) (for याज्ये). K4 B7 D5. 7 G3 नराधिप (B7 °पैः). — c) Ś1 (*sup. lin.* as in text) K1. 2 वसथे; Da4 च विशे (for च वशे). — d) D6. 7 T G1–3. 6 M1. 5–7 संशयान् (for °यम्).

11 a) T1 G2. 3. 6 स्व- (for स). — b) D8 D2 T G1. 2 M1. 5–7 मोक्षधर्म-; D7 °धर्मे; G3. 6 °धर्मो (for -शास्त्र-). K1. 4 -विशारदाः. — c) Ś1 K1. 2. 4 यथा यथा च ते ब्रूयात् (K1 dittography for यथा च ते).

12 Before 12, B9 ins. भीष्म उवाच. — b) K7

C. 12. 12226
B. 12. 326(8). 12
K. 12. 333. 12

पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं भूमिं ससागराम् ॥ १२
स गिरींश्चाप्यतिक्रम्य नदीस्तीर्त्वा सरांसि च ।
बहुव्यालमृगाकीर्णा विविधाश्चाटवीस्तथा ॥ १३
मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं तथा ।
क्रमेणैव व्यतिक्रम्य भारतं वर्षमासदत् ॥ १४
स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ।
आर्यावर्तमिमं देशमाजगाम महामुनिः ॥ १५
पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।
अध्वानं सोऽतिचक्राम खेऽचरः खे चरन्निव ॥ १६
पत्तनानि च रम्याणि स्फीतानि नगराणि च ।
रत्नानि च विचित्राणि शुकः पश्यन्न पश्यति ॥ १७
उद्यानानि च रम्याणि तथैवायतनानि च ।
पुण्यानि चैव तीर्थानि सोऽतिक्रम्य तथाध्वनः ॥ १८
सोऽचिरेणैव कालेन विदेहानाससाद ह ।
रक्षितान्धर्मराजेन जनकेन महात्मना ॥ १९
तत्र ग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान् ।
पल्लीघोषान्समृद्धांश्च बहुगोकुलसंकुलान् ॥ २०
स्फीतांश्च शालियवसैर्हंससारससेवितान् ।

---

$D_{4.9}$ प्रति ( for मुनिः ). — [c]) $K_6$ $V_1$ $B_{0.6-9}$ $D_{a4}$ $D_{s1}$ शक्तोंतरीक्षेण. — [d]) $K_{2.4}$ $B_7$ $D_5$ क्रांतं ( for क्रान्तुं ). $K_6$ $V_1$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2.3.8}$ पृथ्वीं ( for भूमिं ). $D_8$ ससागरं.

13 [a]) $D_{a4}$ स गिरश्च; $D_{n4}$ सगरं ( for स गिरींश्च ). $K_7$ $D_{4.5.7.9}$ व्यतिक्रम्य ( for [अ]प्य° ). — [b]) $K_6$ $V_1$ $B_{6.7.8}$ ( marg. ). 9 $D_{a3.a4}$ $D_{n1.n4}$ $D_{s2}$ $D_{2.3.8}$ नदी-ती( $K_6$ $B_8$ [ marg. ] °र्दी ती )र्थ-; $B_0$ नदीस्तीर्थान्; $D_{s1}$ नदीस्तीर्थ-; $D_5$ $G_1$ $M_1$ नदीं तीर्त्वा ( for नदीस्तीर्त्वा ). — [c]) $T_1$ $G_{2.3.6}$ $M_7$ बहुव्याळ-; $T_2$ °व्याघ्र- ( for °व्याल- ). $Ś_1$ $K_{1.2.4}$ बहुव्याडवृकाकीर्णा. — [d]) $D_7$ $T_1$ $G_6$ चौषधीस्; $T_2$ $G_{1-3}$ चौषधी( $T_2$ $G_1$ °धि )स्; $M_{1.7}$ चार्णवीस् ( for चाटवीस् ). $K_6$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2.3.8}$ ह्यटवीश्च ( $K_6$ पदवीश्च; $B_0$ ह्यटवी च; $D_{s1}$ $D_2$ ह्यटवीं च ) वनानि च.

14 [a]) $D_{5.7}$ $G_3$ अधश्च; $T_2$ $G_{1.2}$ $M_{5.6}$ गिरेश्च ( for हरेश्च ). $D_{n1}$ देवर्षेर् ( for द्वे वर्षे ). $D_{a4}$ रोमे हरिश्च द्वे वर्षे; $M_{1.7}$ मेरेमिरेश्चले वर्षे ( sic ). — [b]) $K_1$ $D_4$ हेमवतं; $D_7$ $G_3$ हैमवतस्. $V_1$ $B_{0.6.8}$ ( orig. ) $D_{a3}$ $D_{n1.n4}$ $D_8$ $D_{2.3.5.7.8}$ T $G_{1.3.6}$ ततः ( for तथा ). $G_2$ वर्षं हैमवतस्य तं. ❀ Cv : हैमवतं, हिमवत उत्तरभागे स्थितं किंपुरुषम् । ❀ — [c]) $K_7$ $B_6$ $D_{a3.a4}$ $D_{n4}$ $D_{s2}$ $D_{8.8}$ $G_{7.8}$ [ए]वं ( for [ए]व ). $G_3$ अतिक्रम्य ( for व्यति° ). $G_2$ क्रौंचस्यैवमतिक्रम्य. — [d]) $K_4$ आसदं; $D_{s1}$ °दीत् ( for °दत् ).

15 [b]) $K_7$ $D_{a4}$ चीण-; $B_6$ ( marg. ) च न; $T_2$ चिण- ( for चीन- ). $Ś_1$ $K_{1.2.4}$ -हून- ( for -हूण- ). $K_1$ -निषेविनात्; $K_6$ -विशेषितान्; $G_3$ -निषेवणात् ( for °वितान् ). $B_6$ श्रीमज्जननिषेवितान्; $D_{5.7}$ तपस्वीभिर्निषेवितान् ( $D_7$ °वणात् ); $G_2$ चित्रवर्णैर्नि°. — [c]) $K_2$ आर्यावंतम्. $D_7$ $T_1$ इदं ( for इमं ). — [d]) $G_2$ जगाम स ( for आजगाम ).

16 [b]) $D_{a4}$ विचिंतयेत्. — [d]) $K_6$ $V_1$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_{s1}$ $D_{2-5.7-9}$ T $G_{1.3.6}$ $M_{1.5-7}$ Cv ( gloss : सूर्यः ) खचरः; $G_2$ स चरन् ( for खेऽचरः ). $K_7$ खचरन् ( for खे चरन् ).

17 [a]) T $G_{3.6}$ पट्टणा( $T_2$ °ना )नि ( for पत्तनानि ). $G_2$ om. च. $D_{s1}$ रम्यानि. — $Ś_1$ $K_{1.2.4}$ transp. 17[b] and 18[b]. — [b]) $D_{4.9}$ तथैव; $G_2$ स्थिराणि ( for स्फीतानि ). $D_2$ om. from नगराणि up to तीर्थानि ( in 18[c] ). — $K_7$ $D_{4.9}$ om. (hapl.) 17[c]–18[b]. $B_8$ reads 17[c] twice. — [c]) $Ś_1$ ( *sup. lin.* ) पुराणि ( for रत्नानि ). $B_8$ ( second time ) विचित्राणि शुकः पश्यन्. — [d]) $K_4$ $B_0$ $D_{n1.n4}$ $D_8$ $D_{3.8}$ पश्यन्नपि ( for शुकः पश्यन् ). $D_5$ तु ( for न ).

18 $K_7$ $D_{4.9}$ om. 18[ab]; $D_2$ om. 18[abc] ( for both, cf. v. l. 17 ). $Ś_1$ $K_{1.2.4}$ transp. 17[b] and 18[b]. — [c]) $K_4$ $B_9$ $D_{n1.n4}$ $D_8$ $D_{3.8}$ रत्नानि ( for तीर्थानि ). — [d]) $K_{4.6.7}$ $V_1$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2-5.7-9}$ $M_{1.5-7}$ सोत्य( $K_6$ सोद्य; $B_6$ सोति-; $D_{a4}$ सोध्य )-क्रामद( $K_6$ $B_9$ $M_{1.5-7}$ °द्य )थाध्वगः; T $G_{1-3.6}$ ततोत्यक्रामदध्वगः.

19 [a]) $Ś_1$ $K_{1.2.4}$ अचिरेण ( for सोऽचि° ). $G_2$ हि ( for [ए]व ). — [b]) $K_6$ च ( for ह ). — $V_1$ reads 19[c]–24[d] on marg. — [c]) $V_1$ विक्षितान्; $G_3$ रक्षिता ( for रक्षितान् ). — [d]) $D_{s1}$ विदेहेन ( for जनकेन ).

20 $V_1$ reads 20 on marg. — [a]) $T_1$ ग्राम्यान् ( for ग्रामान् ). — [b]) $K_{1.4}$ $D_{s1}$ बहून्न- ( sic ); $K_2$ बहुन्न ( for बह्वन्न- ). $K_2$ -भोजनं; $D_{s2}$ -भाजनान् ( for

पद्मिनीभिश्च शतशः श्रीमतीभिरलंकृतान् ॥ २१
स विदेहानतिक्रम्य समृद्धजनसेवितान् ।
मिथिलोपवनं रम्यमाससाद महर्द्धिमत् ॥ २२
हस्त्यश्वरथसंकीर्णं नरनारीसमाकुलम् ।
पश्यन्नपश्यन्निव तत्समतिक्रामदच्युतः ॥ २३
मनसा तं वहन्भारं तमेवार्थं विचिन्तयन् ।
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह ॥ २४
तस्या द्वारं समासाद्य द्वारपालैर्निवारितः ।
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह ॥ २५
स राजमार्गमासाद्य समृद्धजनसंकुलम् ।
पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह ॥ २६
तत्रापि द्वारपालास्तमुग्रवाचो न्यषेधयन् ।
तथैव च शुकस्तत्र निर्मन्युः समतिष्ठत ॥ २७
न चातपाध्वसंतप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नापैति च तथातपात् ॥ २८
तेषां तु द्वारपालानामेकः शोकसमन्वितः ।

C. 12. 12241
B. 12. 326(3). 27
K. 12. 333. 29

-भोज° ). M1. 6. 7 बहुजनरगोकुलान्. — $^{c}$) Ś1 K1 वाल्ली-; K2. 4 वल्ली ; B8. 9 Da3 D7 पल्लीर्; M1. 5–7 वणिग्- ( for पल्ली- ). ❀ Ca : पल्लीः म्लेच्छालयान्, घोषान् आभीरपल्लीः ॥ Cs : पल्लीघोषान्, आभीरनिवासान् गोनिवासांश्च । ❀ — $^{d}$) K7 -संमतान् ( for -संकुलान् ).

21 V1 reads 21 on marg. — $^{a}$) D7 T G1–3. 6 वृतांश् ( for स्फीतांश् ). Ś1 K1. 2 श**वसैर्; V1 शालिभिश्चैव; B6. 7. 9 Da2. a4 D7 T G1–3. 6 M1. 5–7 शालि( G1 °ली-; M1. 7 °ल )यवकैर्; Dn4 शीतियवसैर् ( for शालि° ). — $^{b}$) M1. 6. 7 -सेवितैः ( for -सेवितान् ). — D5 om. ( hapl. ) $21^{cd}$. K1 repeats $21^{cd}$ after $22^{ab}$. — $^{d}$) K1 ( both times ) अलंकृतं.

22 V1 reads 22 on marg. — $^{a}$) D7 T G1–3. 6 सर्वान्देशान्; M6 सर्वदेशान् ( for स विदेहान् ). — $^{b}$) G2 -जल- ( for -जन- ). — After $22^{ab}$, K1 repeats $21^{cd}$. — $^{d}$) K4 V1 Bo. 6. 8 Dn1. n4 D8 D2. 3. 7. 8 T1 G3 समृद्धिमत् ( for महर्द्धि° ).

23 V1 reads 23 on marg. — $^{a}$) B9 D8 ( before corr. ) -संपूर्णं ( for -संकीर्णं ). — $^{b}$) T3 -समन्वितं ( for -समाकुलम् ). — G2 om. ( hapl. ) $23^{c}$–$26^{b}$. — $^{c}$) D5 इति ( for इव ). Ś1 K1. 2 स ( for तत् ). — $^{d}$) Ś1 K1. 2 समत्यक्रामद् ( for समति° ). K4 अच्युत.

24 G2 om. 24 ( cf. v. l. 23 ). V1 reads 24 on marg. D7 T G1. 3. 6 om. $24^{ab}$. — $^{a}$) Ś1 K1. 2. 4 तु ( for तं ). B8 D5 महद् ( for वहन् ). B8 भावं ( for भारं ). — $^{b}$) D5 भवितार्थं ( for तमेवार्थं ). — $^{c}$) K2 आत्मना स ( for आत्मारामः ). K7 D5. 9 प्रशांतात्मा ( for प्रसन्नात्मा ).

25 G2 om. 25 ( cf. v. l. 23 ). — $^{a}$) K2 V1 Da3 T1 G3. 6 M1. 5–7 तस्य; B9 तस्यां ( for तस्या ). — K7 om. ( hapl. ) $25^{b}$–$26^{a}$. Dn1. n4 Cal. Bom. ed. om. ( hapl. ) $25^{b}$–$26^{c}$. — $^{b}$) D4 द्वारपाल- ( for °पालैर् ). K6 B6–8 Da4 निवेदितः; V1 निषेधितः ( for निवारितः ). — $^{c}$) Ś1 K1. 2. 4 Da3 D2. 3. 9 स्थिरो ( for स्थितो ). K6 यानपरो ( for ध्यान° ). K6 V1 Bo. 6–9 Da4 Ds2 D8. 5. 7 T1 G3. 6 युक्तो ( for मुक्तो ). — $^{d}$) T2 विदितं ( for °तः ). V1 विदितः परिविवेश ह ( hypermetric ).

26 G2 om. $26^{ab}$ ( cf. v. l. 23 ). K7 om. $26^{a}$; Dn1. n4 Cal. Bom. ed. om. $26^{abc}$ ( for both, cf. v. l. 25 ). — $^{a}$) Ds1 स्व- ( for स ). Ś1 K1. 2. 4 Da3 D2. 3. 9 राजसानम् ( sic ); Da1 °राजम् ( for °मार्गम् ). — $^{c}$) ❀ Cs : पार्थिवक्षयं, राजमन्दिरम् । ❀ — $^{d}$) D5 निःशंकं. K6 B6. 7 Da3. a4 निराशं( Da3. a4 °तं )को विवेश ह.

27 $^{a}$) K1 Ds1 द्वारपालस् ( for °पालास् ). — $^{b}$) Ś1 K1. 2 क्रूर-. Bo Da4 -वासा; B6. 8 Da3 Dn1. n4 D8 D2. 3. 8 G2 -वाचा; M5 -वाग्भिर् ( for -वाचो ). D5 तं तु वाचा. K1 न्यषेधयं; D8 °यत्. — $^{c}$) T1 G3. 6 तत्रैव ( for तथैव ). M1. 5–7 तु ( for च ). Ds1 D2 तस्य ( for तत्र ).

28 $^{a}$) Ś1 K1. 2. 4 तापाध्व- ( for [ आ ]तपाध्व- ). B8 ( marg. as in text ) न चातप्यत संतप्तः; D5 न वा तथाध्वा संतप्तः. — $^{b}$) D7 क्षुत्पिपासाक्षमान्वितः. — K7 D4. 9 om. ( hapl. ) $28^{c}$–$29^{b}$; V1 reads the same on marg. — $^{c}$) K1. 4 प्रतास्यत; V1 Dn1 Ds2 प्रताप्यति; M1. 5–7 प्रतप्यति ( for प्रताम्यति ). V1 D5. 7 ग्लाप( D5 °य )यति; G1 ग्लानियति वा ( for ग्लायति वा ). — $^{d}$) K1. 2 न पैति च; V1 न चापैति; T1 G1. 3. 6 नैवेति च; T2 G1 नोपैति च; M1. 5–7 नापयाति ( for नापैति च ). K1 M7 तथातपान्; B8 ( marg. ) तथाभयात्; T G1–3. 6 तथारुषं ( for तथातपात् ).

C. 12. 12142
B. 12 326(5).28
K. 12 333. 29

मध्यंगतमिवादित्यं दृष्ट्वा शुकमवस्थितम् ॥ २९
पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां द्वितीयां राजवेश्मनः ॥ ३०
तत्रासीनः शुकस्तात मोक्षमेवानुचिन्तयन् ।
छायायामातपे चैव समदर्शी महाद्युतिः ॥ ३१
तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां तृतीयां राजवेश्मनः ॥ ३२
तत्रान्तःपुरसंबद्धं महच्चैत्ररथोपमम् ।
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ॥ ३३
तद्दर्शयित्वा स शुकं मन्त्री काननमुत्तमम् ।
अर्हमासनमादिश्य निश्चक्राम ततः पुनः ॥ ३४
तं चारुवेषाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः ।
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः ॥ ३५
संलापोल्लापकुशला नृत्तगीतविशारदाः ।
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ ३६
कामोपचारकुशला भावज्ञाः सर्वकोविदाः ।

---

29 K7 D4.9 om. $29^{ab}$ (cf. v. l. 28). V1 reads $29^{ab}$ on marg. — a) T1 G2.3.6 तद् (for तु). K2 द्वारपालेन (for °पालानाम्). D5.7 तत्रापि (D7 तेषां तु) द्वारपालस्तम्. — b) Ś1 K1.2.4 एकस्तत्र व्यवस्थितः; G2 दुःखशोकसमन्वितः. — d) M1.6.7 उपस्थितं (for अव°). Da4 दृष्ट्वा शुकसमन्वितः; G2 °कं समास्थितं.

30 a) Ś1 K1.2 यथान्यास्यम्; Da4 यदान्यायम्. — b) K4 D4 कृतांजलि; Da4 °जलिं. — c) K2 D8 G2 प्रवेशयत्. K1 वृक्ष्यां (sic); K6.7 V1 Bo.7.9 Da3 Dn1 D8 D2.4.5.8.9 कक्षां; D7 T2 कक्ष्यं (for कक्ष्यां). Da4 प्रावेशय कृतशुक्षां (sic). — d) K6.7 B9 Da3.a4 D4.7.9 T G1–3.6 M5.6 प्रथमां (K7 T2 °मं) (for द्वितीयां).

31 Ś1 K1.2.4 M1.7 om. (hapl.) 31–32. — a) D5 तमासीनः; T2 तत्राशीनः. G2 भृशं (for शुकस्). D8 स्थाने; D5 तत्र (for तात). — b) K6.7 Bo.8 Dn1 D8 D2–4.8.9 अन्व(K6 °नु)चिंतयत्; B7 Da3.a4 Dn4 D5 अन्वचिंतयन् (for अनु°). — d) D7 G3 समं दिशि (for समदर्शी). K6 B6 (marg. as in text).7 Da3.a4 Dn1.n4 D8 D2.3.8 सम- (for महा-). V1 -तपाः; B8 (marg. as in text) -मतिः (for -द्युतिः).

32 Ś1 K1.2.4 M1.7 om. 32 (cf. v. l. 31). — a) Bo D7 G2 मुहूर्तम् (for °र्ताद्). — b) T2 राजो (for राज्ञो). G6 मंत्रिः. — c) K6.7 V1 Bo.6.9 Da3.a4 Dn1.n4 D8 D2.4.5.8.9 कक्षां (for कक्ष्यां). — d) K6.7 Bo.6–9 Da3.a4 Dn1.n4 D2.4.7–9 T G1–3.6 M5.6 द्वितीयां (K7 °यं) (for तृ°).

33 G2.8 om. (hapl.) 33–34. — a) K1 T1 -संबंद्धं; K7 T2 -संबंधं (for -संबद्धं). — b) K1.2 Da4 महच्च; D9 T2 महा- (for महच्). T1 महच्चैत्ररथं यथा. — c) Da1 M1.5–7 सुवि(M7 °भि)भक्तं (for °भक्त-). K2 D7 -जलक्रीडं; K6 -जनाक्रीडं; K7 -जलाक्रीडां (for °क्रीडं). — d) Ś1 K1.2 रम्य- (for रम्यं). B8 (marg.) -काननं (for -पादपम्).

34 G2.3 om. 34 (cf. v. l. 33). V1 reads $34^{abc}$ on marg. — a) K7 V1 D4.9 T G1.6 तं (for तद्). K7 lacuna; D4.9 तु (for स). — b) K7 D4.9 कांचनम् (for कान°). — For $34^{ab}$, K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.7.8 Cal. Bom. ed. subst.:

790* शुकं प्रावेशयन्मन्त्री प्रमदावनमुत्तमम् ।

[ Da4 शुक्रं. D5.7 दर्शयित्वा शुकं मंत्री (for the prior half). ]

— c) K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 Cal. Bom. ed. स तस्यासन(K6 °स्य वन)म्; D5.7 अर्होपासनम् (for अर्हमा°). Ś1 आवेद्य; K1 आवेश्य; Da2 उद्दिश्य (for आदिश्य). K2 अर्पमानसमावेश्य; K4 अर्हमामनसावेश्य. — d) B8 (marg. as in text) पुनः; T2 मतः (for ततः). Da4 पुरं (for पुनः).

35 a) Ś1 K1.2.4.6 V1 Bo.6–9 Dn4 Da2 D8 चारुवेशाः (for °वेषाः). K2 सुश्रोन्यस्; Da4 G1 °ण्यास् (for °ण्यस्). — b) K1 तरुण्याः; K6 B6.7 Da3.a4 कुलीनाः; G1.8 तरुणं (for °ण्यः). K4 -दर्शिनः; G2.3 -दर्शनं. — c) K7 D4.9 शूक्ष्म- (for सूक्ष्म-). — d) K2 -भूषिणाः (for -भूषणाः). — After 35, K1 reads $36^{cd}$.

36 a) Ś1 K1.2 D5 T2 G1.2 संलापालापकुशला; D7 T1 G3.6 सल्लापालाप°. — Ś1 K2.4 om. (hapl.) $36^{b}$–$37^{a}$. K1 om. $36^{b}$. — b) K6.7 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.7.8 T1 G2.6 नृत्य- (for नृत्त-). D8 om. (hapl.) $36^{c}$–$37^{b}$. — K1 reads $36^{cd}$ after 35. — c) K6 -भाषिन्यो (for -भाषिण्यो). — d) M1.5–7 रूपेणाप्सरसोपमाः.

परं पञ्चाशतो नार्यो वारमुख्याः समाद्रवन् ॥ ३७
पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्य च ।
देशकालोपपन्नेन साध्वन्नेनाप्यतर्पयन् ॥ ३८
तस्य भुक्तवतस्तात तदन्तःपुरकाननम् ।
सुरम्यं दर्शयामासुरेकैकश्येन भारत ॥ ३९
क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चैव ताः शुकम् ।
उदारसत्त्वं सत्त्वज्ञाः सर्वाः पर्यचरंस्तदा ॥ ४०

आरणेयस्तु शुद्धात्मा त्रिसंदेहस्त्रिकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ ४१
तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं ददुस्ताः परमस्त्रियः ॥ ४२
पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ ४३
पूर्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः ।

C. 12. 12256
B. 12. 32(3).42
K. 12. 332. 44

37 Ś1 K2.4 om. $37^{a}$; D8 om. $37^{ab}$ (for both, cf. v. l. 36). K1 om. $37^{a}$. — a) V1 Bo.6 (marg.).8 (marg. as in text) Da3.a4 D7 T G1–3.6 कालोपचार-; M1.5–7 कला(M5 °लो)पचार- (for कामोप°). — b) K1 भावज्ञः; T2 कालज्ञाः; Cs (gloss: भावो विलासो भेदस्तज्ज्ञाः) भावज्ञाः (as in text). D8 T G1 M1.5–7 Cs (gloss: सत्त्वं, परचित्तं, तद्ग्रहणसमर्थाः) सत्त्वकोविदाः; D5 स्मित°; D7 G2.3 सत्य°; G6 तत्त्व° (for सर्व°). — c) K2 परं पंचशतो; K6.7 V1 Bo.7–9 Da3 Dn1.n4 D8 D2.3.8 G1 M1.5–7 परं पंचाशतं; B6 D4.9 परं पंचशता; B8 (marg.) D5.7 T G3.6 परं पंचशतं; Da4 परं पंचाशता; D8 परे पंचाशतो; G2 परं परःशतं; Ca (gloss: पञ्चाशदधिकाः) परं पञ्चाशतो (as in text). — d) Ś1 समद्रवन्; K1 समुद्रवन्; K2 समाक्रमन् (for °द्रवन्).

38 a) K1.4 पद्यादीनि (for पाद्यादीनि). Dn1 G2 प्रतिगृह्य (for °ग्राह्य). D7 पाद्यादि प्रतिगृह्याथ. — b) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 परया- (K6 Bo °सा)र्चयन्; T G1–3.6 परयास्य च (for परयार्च्य च). D5.7 पूजया चैनमर्चयत् (D5 °न्). — c) K6.7 Bo.6 (marg. as in text).7–9 Da3.a4 Dn1.n4 D8 D2.3.8 M1.5–7 कालोपपन्नेन तदा (B8 °था). — d) K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 T1 G1.3.6 स्वाद्वन्नेन; D5 lacuna; G2 स्वाद्वन्नैर् (for साध्वन्नेन). K4.6.7 V1 Bo.6–8 Da3.a4 Dn1.n4 D8 D2–4.8.9 अभ्य- (V1 °भि)तर्पयन्; D7 अप्यतर्पयत्.

39 a) Da4 तस्य भुक्तस्य वचसा. — d) Ś1 K1.2.4 एकैकश्ये(K2 °श्ये)न; B9 Dn4 D2.4 T2 °कस्येन; Ds2 °कस्यानु-; D5.7 °कत्वेन; T1 G6 °कस्य च; G7.8 °कस्याश्च (for °कश्येन).

40 a) K1.4 क्रीडंतिश्च. — b) G2 नृत्यंत्यश्च (for गायन्त्यश्च). K6 V1 Bo.8 Dn1.n4 Ds2 D2.3.8 चापि; Ds1 चाथ (for चैव). K1 तां; T1 G2.3.6 तं (for ताः). Bo.8 (marg. as in text) Dn1.n4 D8 D2.3.8 शुभं (for शुकम्). B6.7.8 (marg.) जगीयंत्यश्च तं शुकं; B9 गायंत्यत्यश्च तं शुकं; Da3.a4 जिगीषंत्यश्च तं शुकं. — c) D5 तत्त्वज्ञाः; G2 सर्वज्ञाः (for सत्त्वज्ञाः). — d) K4.6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds1 D2.3.5.8 स्त्रियः (for सर्वाः). K6 Bo.6.7.8 (marg. as in text) Da3.a4 Dn1 n4 D8 D2.3.8 T1 G3.6 तथा (for तदा).

41 a) K1 आरणीयस्; K6 Dn4 °ण्येयस् (for °णेयस्). D8 M1.5–7 Ca त्रि- (for तु). V1 D6 धर्मात्मा (for शुद्धात्मा). — b) K4.7 B7–9 Da3 Dn1.n4 D2–4.8.9 नि(D4.9 नृ)संदेहस् (K4.7 °हं); T1 G6 विसं° (for त्रिसं°). K7 Dn1.n4 D2.3.8 स्वकर्मकृत् (for त्रि°). ❀ Ca: संदेहव्युदासार्थमेव त्रीणि कर्माणि श्रवणमनननिदिध्यासनानि कृतवान् । यद्वा । त्रिकर्मकृत्, यज्ञाध्ययनदानपरः । यद्वा देहिकमाहारविहारादिकर्म प्राणायामादिकमिति ॥ Cs: त्रिसंदेहः, त्रिषु गार्हस्थ्याद्याश्रमेषु संदेहो यस्य । किमुत्पन्नज्ञानेन शरीरोत्पत्त्यनन्तरं ब्रह्मचर्यावस्थायां विदिते परमात्मतत्त्वे किं गार्हस्थ्यादिषु स्थातव्यमुत नेति संदेहो यस्य। त्रिकर्मकृत्, भिक्षाध्ययनगुरुशुश्रूषाकृत् ॥ Cv: त्रिषु, मोक्षेतरपुरुषार्थेषु संदेहः अनिषिद्धश्चेदस्तु, निषिद्धं च मास्त्विति। ❀ — c) K1 कश्येंद्रियो; D2 वर्श°. — d) Da4 हृष्यति; Ds1 दुष्यति; D5 तप्यति (for कु°).

42 b) K2 M7 परार्हं; K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 देवार्हं (for वरार्हं). — c) K1 सव्यास्तरण-; K2 सव्या°; K7 Ds1 D5 स्पर्धा°; Da4 सद्या°; D7 स्वाध्वा°; T1 G1.6 स्वध्या°; G2.3 साध्वा° (for स्पर्ध्या°). K2 B3.9 Dn1.n4 D8 D2.3 G2 -संकीर्णं; M7 -संस्तीर्णा (for °र्णं). — d) Ds1 परमाः (for परम-).

43 a) K6 D5 च (for तु). K1 om. (hapl.) from कृत्वैव up to रात्रे तु (in $44^{a}$). Ś1 K2 कृत्वा वै; K6 D4 कृत्वेव. — d) Da4 तमेकार्थं; T2 तदेवार्थं (for तमे°).

C. 12. 11257
B. 12. 326(5). 43
K. 12. 333. 44

मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः ॥ ४४
ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ॥ ४५
अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ४६

इति श्रीमहाभारते शान्तिपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

# ३१३

भीष्म उवाच ।
ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरः पुरोहितं कृत्वा सर्वाण्यन्तःपुराणि च ॥ १
आसनं च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात् ॥ २
स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ ३
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ ४
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत् ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ।
स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ॥ ५

---

44 K1 om. up to रात्रे तु ( cf. v. l. 43 ). — a) D5 तस्य; M7 कृत्वा ( for तत्र ). — c) V1 मध्ये ( for मध्य- ). Ś1 K2 T2 यथान्यायेयं. — d) Ś1 K1.2 आहरयत्; M1.7 आहारयन् ( for °यत् ).

45 a) Da1 मनो ( for ततो ). D7 T1 G2.3.6 मुहूर्तम् ( for °र्ताद् ). — b) K7 कृत- ( for कृत्वा ). Da4 अनंतकः ( for अनन्तरम् ). — c) B6 ( marg. ) शुको ( for परि- ).

46 a) G2 [अ]भीक्ष्णं ( for कार्ष्णिस् ). — b) G2 तदंगं ( for तदहः- ). B8 ( marg. ) अच्युत; B9 T1 G2.3.6 अच्युत. — c) M7 तं ( for तां ). D7 T1 G2.3.6 नृपः काले ( for नृपकुले ). — d) B7 Da4 भारतः.

Colophon. D6 missing : K3.5 B1–5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan* : Ś1 K1.2.4.6.7 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.4.5.8 T G1–3.6 M1.5–7 मोक्षधर्म. — *Adhy. name* : Ś1 K1.2.4.6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D8 शुकोत्पत्तिः; K7 D4.5.9 शुकोत्पत्तौ मिथिलाप्राप्तिः ( K7 °लाप्रवेशः ); D2.8 शुकोत्पतनं; M5 शुकोत्पत्तौ मिथिलाभिगमनं; M6 मिथिलाभिगमनं. — *Adhy. no.* ( figures, words or both ) : K6 50; B7 145; B8 251; Dn1 151; Dn4 Da3 149; D8 G1 M1.6.7 146; T1 G6 147; T2 160; G2 163; G3 148; M5 183. — *Śloka no.* : Da4 47; Dn1.n4 45; D8 46.

## 313

This adhy. is missing in D6 ( cf. v. l. 12. 283. 15 ).

1 V1 reads 1 on marg. — a) Ś1 K1.2.4 सहितो ( for जनको ). — b) Da4 भारतः. Ś1 K1.2.4 मंत्रिभिः कुरुसत्तम. — c) K1 पुरा; Da4 पुनः ( for पुरः ). D7 T G1–3.6 M1.5–7 पुरोहितं पुरस्कृत्य.

2 K2.4 G3 om. ( hapl. ) 2ab; Ś1 reads it on marg. — c) K6 Dn1.n4 D5.7 G2 चार्घम् ( for चार्घ्यम् ). — d) G2 उग्रपुत्रं ( for गुरु° ). K6.7 B6.7.9 Da3.a4 D4.5.7.9 T G1–3.6 समभ्ययात् ( for °भ्यगात् ).

3 a) B9 आसाद्य ( for आदाय ). Ś1 K1.2.4 महदासनमादाय. — b) Ś1 K1.2 सर्व- ( for बहु- ). — c) K6 Da1 D5 स्पर्द्धास्तरण-; D7 T G1–3.6 स्वाध्वा( D7 स्वाध्या-; T G1.6 स्वध्या )स्तरण- ( for स्पर्ध्या° ). B8 ( marg. ) D8 G2 -संकीर्णं ( for -संस्तीर्णं ). — d) Da4 ऋद्धिमान् ( for °मत् ).

4 a) G2.3 पुरोहितं ( for °धसा ). B8 संगृहीतुं; D5.7 सद्गृहीतं ( for संगृ° ). K6 पुरोधसा गृहीतं तं; T1 G6 पुरोहितगृहीतं वै. — b) K7 G2 पार्थिव. — d) Ś1 K1.2 परमोचितं; T1 G6 °मासनं ( for °मार्चितम् ).

5 a) K1 ततोपविष्टं ( for तत्रो° ). — b) B0 शास्त्रे

कृत्वा भारावतरणं वसुधाया यथेप्सितम् ।
सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम ।
करिष्ये प्रलयं घोरमात्मज्ञातिविनाशनम् ॥ ९२
कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम् ।
कृत्वा लोकान्गमिष्यामि स्वानहं ब्रह्मसत्कृतान् ॥ ९३
हंसो हयशिराश्चैव प्रादुर्भावा द्विजोत्तम ।
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता तदा ।
सवेदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ॥ ९४
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ।
अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ।
लोककार्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः ॥ ९५
न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ।
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ॥ ९६
एतत्ते सर्वमाख्यातं ब्रह्मन्भक्तिमतो मया ।

C.12.17972
B.12.340(29).106
K 12.348.59

850* राज्यं प्रशासति पुनः कुन्तीपुत्रे युधिष्ठिरे ।

[ G2 कुंतीपुत्रो युधिष्ठिरः ( for the post. half ). ]

— D5 reads 92[cd/] twice. — [c]) G2 सर्वसत्त्वमतख्यानाद्. — [d]) K1. 2. 4. 7 D4. 9 द्वारकायां ( for °याश्च ). K4 Da4 D4. 7. 9 सत्तमः. D6 ( both times ) द्वारकायां वसन्नथ. — [e]) K4 करिष्यै. K7 D4. 9 M1. 6–7 कदनं; T3 G2 प्रळयं ( for प्रलयं ). — [f]) K1. 2. 4 आत्मनाशाभिसंवृतं; K6 Bo. 6 ( marg. ). 8. 9 Dn1. n4 D8 D2. 3. 5 ( both times ) G1 C8 ( gloss : मम संकल्पानुरूपं ) आत्मज्ञानाभिसंज्ञितं ( K6 B6 Dn1 °हितं; B8 °वृतं; D5 °स्मृतं; G1 °क्षयं ); B6. 7 Da3. a4 D8 °ज्ञानाभिसंहितः; D7 °ज्ञातिसमाश्रयं; T1 G2. 3. 6 °ज्ञातिवधाश्रयं; T2 °ज्ञाति द्वि संश्रयं; Kumbh. ed. आत्मज्ञानाभिसंश्रयः. — After 92, Kumbh. ed. ins. a passage given in App. I, ( no. 31 ).

93 [a]) K1. 4. 6 B6. 8. 9 Dn4 D2. 3. 8 G1 अपरिमेयाणि. G2 कर्माण्यनेकरूपाणि. — [b]) M6. 7 ह्ययं ( for ह्यहम् ). M1 चतुर्मूर्तिरयो ह्यहं. ❀ C8 : चतुर्मूर्तिधरः, बलभद्रकृष्णप्रद्युम्नानिरुद्धमूर्तिधरः । ❀ — [c]) K2 गरिष्यामि; M1 भवि°; M6. 7 भजि° ( for गमि° ). — [d]) Dn4 तानहं; T G1–3. 6 M5 स्वानेव ( for स्वानहं ). K6 Da3. a4 लोक- ( for ब्रह्म- ). K2 -संस्कृतान्; D5 -संमतं; D7 -सत्कृतं; M1. 6. 7 -संस्तुतं ( for -सत्कृतान् ). D8 चतुर्मूर्तिधरस्त्वहं. — D7 T G1–3. 6 ins. a passage given in App. I, ( no. 31 ) after 93 : Kumbh. ed. after 92.

94 K1. 2. 4 read 94[ab] after 94[cf]. — [a]) K1. 2. 4 हंसाः कूर्म( K2 °र्मा )श्च मत्स्याश्च; K6. 7 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 8. 9 M1. 5–7 हंसः ( Da4 हंस-; M1. 5–7 सिंहः ) कूर्मश्च मत्स्य( Dn4 °त्स )श्च. ❀ C8 : हंसः सांख्याचार्यः कपिलः । ❀ — [b]) B8. 9 D7 T G1–3. 6 प्रादुर्भावो; Dn1 D8 °र्भावाद् ( for °र्भावा ). Da4 द्विजोत्तमः; Dn4 °त्तमं. K1. 2. 4 प्रादुर्भावा ( K1 °वो ) युगे युगे. — After 94[ab], K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 C8 ins. :

851* वाराहो नारसिंहश्च वामनो राम एव च ।
रामो दाशरथिश्चैव सात्वतः कल्किरेव च ।

[ ( L. 1 ) D8 वराहो नरसिंहश्च ( for the prior half ). — ( L. 2 ) K6 दासरथिश्च; D5 सौगतिः ( for सात्वतः ). ]

— [c]) K7 D9 यथा ( for यदा ). D7 G3 चैव ( for वेद- ). K1. 4 -श्रुतिं ( for -श्रुतिर् ). — [d]) D7 तथा; T G1–3. 6 M1. 5–7 तदा ( for मया ). K6 Da4 D8 प्रत्याहृता; K7 °हृतं; Dn1 °हृताः ( for °हृता ). K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 पुनः; D7 T G1–3. 6 M1. 5–7 मया ( for तदा ). — [e]) Da4 वेदा. Da4 Ds1 सश्रुतिकाश्च. K1 T2 स वेदः स श्रुती( T2 °ति )कश्च; K6. 7 D4. 9 सर्वे वेदा समानीताः; G3 वेदाः सश्रुतिकश्चैव. — [f]) K6. 7 D4 हृताः; T2 कृतः; M6 कृत्वा ( for कृताः ). Da4 पूर्वे; Ds1 सर्वं ( for पूर्वं ). K1. 2 B7 कृता लोका ( B7 पूर्वं ) युगे युगे.

95 [a]) Da4 अतिक्रांता. — [b]) M1. 7 श्रुतां ( for श्रुतास् ). D6 च ( for ते ). K1. 2. 4. 7 D4. 9 M6 वै ( for वा ). — [c]) G2 अतिक्रांतश्च. D7 T G1–3. 6 भगव( G2 °वा )न् ( for बहवः ). — [d]) K1. 2 ममोत्तम; D8 मतोत्तमाः ( for ममो° ). — [e]) K1. 2 D5 [ क ]इं; Da4 lacuna ( for च ). — [f]) K1 स्वा; Dn4 स्व-; D6 च ( for स्वां ). K1. 2. 4 D5. 7 T1 G1. 3. 6 गतः ( for गताः ). — After 95, K1. 2. 4. 7 D4. 9 M1. 5–7 ( all third time ) repeat 31[ab]; and D5. 7 T G1–3. 6 ( all third time ) repeat 31[abcd], both repetitions being followed by 29[e]–30[b] ( also repeated third time ). — After the third occurrence of 29[e]–30[b], K1. 2. 4. 7 D4. 5. 7. 9 T G1–3. 6 M1. 5–7 ins. :

852* पुरुषः सर्वमेवेदमक्षयश्चाव्ययश्च ह ।

[ K1. 2. 4. 7 M1. 5–7 सः ( for ह ). ]

96 G2 om. 96[a]–97[b]. — [a]) Da3 ब्राह्मणा ( for ब्र° ). —Dn1 om. 96[c]–97[d]. — [c]) B8 ( marg. as in text ). 7 Da3. a4 [ इ ]दम् ( for [ इ ]द ). K7 D4. 5. 9 यत्त्वयाद्येह

C 12.12973
B.12.340(39).106
K.12.348.59

पुराणं च भविष्यं च सरहस्यं च सत्तम ॥ ९७
एवं स भगवान्देवो विश्वमूर्तिधरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ॥ ९८
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं प्राद्रवद्बदराश्रमम् ॥ ९९
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥ १००
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणः सदने तात यथा दृष्टं यथा श्रुतम् ॥ १०१

युधिष्ठिर उवाच ।

एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः ।
किं ब्रह्मा न विजानीते यतः शुश्राव नारदात् ॥ १०२
पितामहो हि भगवांस्तस्माद्देवादनन्तरः ।
कथं स न विजानीयात्प्रभावममितौजसः ॥ १०३

भीष्म उवाच ।

महाकल्पसहस्राणि महाकल्पशतानि च ।
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥ १०४
सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।

---

संप्राप्तम्. — d) $K_{1.2.4}$ $Da_3$ $D_6$ चै( $Da_3$ $D_6$ ए )कांत-कृतबुद्धिना.

97 $Dn_1$ om. 97; $G_2$ om. $97^{ab}$ (for both, cf. v. l. 96). — a) $Ds_2$ तत् (for ते). $D_6$ तत्ते सर्वं समाख्यातं. — b) $D_{5.7}$ भक्तिमता (for °मतो). $Dn_4$ $Ds_2$ यथा (for मया). — c) $D_9$ पुराणे (for °णं). $K_{1.2.4}$ भविष्यच्च; $D_9$ °ष्ये; T $G_{1.3.6}$ $M_{1.6-7}$ °ष्यच्च (for °ष्यं). — d) $Dn_4$ साहस्यं च (for सरहस्यं). $K_{1.2.4}$ द्विजोत्तम; $Da_4$ च सह च; $M_1$ च सत्तमः.

98 Before 98, MSS. ins. भीष्म उवाच. — a) $D_5$ च (for स). — b) $K_7$ $D_{4.9}$ सर्व- (for विश्व-). $K_7$ $D_9$ -मूर्तिधरा. — d) $K_{6.7}$ $B_{0.6-9}$ $Da_{3.4}$ $D_{4.5.9}$ $M_{1.6.7}$ तत्रैवांतर्दधे प्रभुः ( $B_8$ [marg.] हरिं ); $Dn_{1.n4}$ $D_{2.3.8}$ °र्दधे पुनः.

99 b) $G_3$ [ई]दृशं (for [ई]प्सितम्). — c) $T_2$ -नारायणा (for °यणौ). $G_2$ दृष्टौ (for द्रष्टुं). $K_1$ अथ-राश्रमं. $K_{6.7}$ $B_{0.6-9}$ $Da_{3.4}$ $Dn_{1.n4}$ $D_8$ $D_{2-5.8.9}$ बदर्याश्रममाद्रवत् ( $K_7$ $D_5$ °माव्रजन्; $Da_{3.4}$ °मद्रवत्; $D_{4.9}$ °माव्रजत् ).

100 $K_{2.4}$ om. 100. — a) $D_5$ om. from इदं up to चतुर्वे (in $100^b$). ❀ $C_8$ : महोपनिषदं, महारहस्यम् । ❀ — c) $K_{6.7}$ $D_9$ -योगमितं ये( $K_6$ ते )न; $Ds_1$ $D_{4.7}$ T $G_{1.3.6}$ $M_{1.6-7}$ $C_8$ (gloss : सांख्ययोगसिद्धान्तेन समन्वितम्) °कृतांतेन (for °कृतं तेन). — $D_7$ om. $100^d$. — d) $T_2$ पांच- (for पञ्च-). $K_1$ पंचरात्रौ नुसंज्ञितं.

101 a) $Ds_1$ -मुखोद्गीते; $D_4$ $T_2$ $G_3$ -मुखाद्गीतं ( $T_2$ °ता ); $M_5$ -मुखोद्गारं (for °द्गीतं). — b) $Da_4$ [ऽ]-श्रावयेत्. $K_{1.2.4.7}$ $D_{4.9}$ मुनीन्; $K_6$ मुनिः (for पुनः). — c) $M_{1.7}$ ब्राह्मणः (for ब्र°). — d) $K_2$ $Dn_4$ द्रष्टं; $Da_4$ दृष्टुं (for दृष्टं). — After 101, $K_7$ $B_{6.8}$ $D_{4.9}$ ins. an addl. colophon [ *Sub-parvan :* $K_7$ $B_6$ $D_{4.9}$ मोक्षधर्म. — *Adhy. name :* $K_7$ $D_{4.9}$ भविष्यकथनं; $B_{6.8}$ नारायणीयं ].

— On the other hand, $D_7$ T $G_{1-3.6}$ ins. after 101 :

853* श्रुत्वा ब्रह्ममुखाद्रुद्रः स देव्यै कथयत्पुनः ।

[ $G_2$ -मुखास्ते तु (for °द्रुद्रः). $G_2$ देवेभ्योकथयत्पुनः (for the post. half). ]

102 b) $K_{2.6}$ $G_2$ महात्म्यं. — c) $K_1$ को (for किं). $K_6$ $B_{0.6-9}$ $Da_{3.4}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ किं वै ( $B_7$ वा ) ब्रह्मा न जानीते. — $K_{1.2.4}$ om. (hapl.) $102^d$–$103^c$. — d) $K_7$ $D_{4.9}$ ततः (for यतः).

103 $K_{1.2.4}$ om. $103^{abc}$ (cf. v. l. 102). — a) $K_{6.7}$ $Dn_{1.n4}$ $D_8$ $D_{2.3.8}$ [ऽ]पि; $G_2$ तु (for हि). $Dn_4$ भगवंस्. — b) $K_7$ $D_{4.9}$ साक्षाद् (for तस्माद्). $K_7$ $B_0$ $T_2$ $G_{1.2}$ अनंतरं. $D_5$ साक्षाद्देवः सनातनः. — c) $K_7$ $B_9$ न स (by transp.); $Da_3$ स्म न. — d) $K_1$ असितौजसाः; $D_5$ तिग्मतेजसः.

104 c) $D_5$ कालेन (for राजेन्द्र). — d) $T_2$ $G_{1.2}$ $M_{1.5-7}$ प्रळयाश्च. $D_8$ $G_2$ तथा; $D_5$ च ये (for च ह). $K_7$ सर्गश्च प्रलयश्च ह.

105 a) $K_7$ $B_8$ (marg. as in text) $D_{4.7.9}$ T $G_{1-3.6}$ $M_{1.5}$ (also as in text)$_{.6.7}$ सर्वस्य (for सर्गस्य). $K_2$ $Ds_1$ स्मृतौ; $B_8$ (marg. as in text) स्थितो; $M_6$ स्मृताद् (for स्मृतो). — b) $Da_4$ प्रजा-सर्गकरप्रभुः. — c) $B_6$ damaged. $K_2$ om. from वरं up to सकाशा (in $106^a$). $Ds_2$ -प्रचुरं (for -प्रवरं). $M_{1.6.7}$ जानीते देवप्रवरो ( $M_6$ °रं ). — d) $K_4$ चांते-षिकं; $D_8$ चातोधिको; $D_7$ $G_2$ सर्वादि( $G_2$ °षि )कं

जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ।
परमात्मानमीशानमात्मनः प्रभवं तथा ॥ १०५
ये त्वन्ये ब्रह्मसदने सिद्धसंघाः समागताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् ॥ १०६
तेषां सकाशात्सूर्यश्च श्रुत्वा वै भावितात्मनाम् ।
आत्मानुगामिनां ब्रह्म श्रावयामास भारत ॥ १०७
षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनाम् ।
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः ।
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् ॥ १०८
सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः ।
मेरौ समागता देवाः श्राविताश्चेदमुत्तमम् ॥ १०९
देवानां तु सकाशाद्वै ततः श्रुत्वासितो द्विजः ।
श्रावयामास राजेन्द्र पितॄणां मुनिसत्तमः ॥ ११०
मम चापि पिता तात कथयामास शंतनुः ।
ततो मयैतच्छ्रुत्वा च कीर्तितं तव भारत ॥ १११
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ।

C. 12. 12969
B. 12.340(39).124
K. 12. 348. 74

( for चातोऽधिकं ). Da4 नृपः; D5 ततः. K7 D4. 9 भूयश्चाप्य( D4 °श्य )धिकं ततः. — D7 T G1–3. 6 om. 105[ef]. — [f] ) K1. 4 पुरुषं; B9 प्रवरं ( for प्रभवं ). K7 D4. 9 सदा; M1. 5–7 तदा ( for तथा ).

106 K3 om. 106 ( cf. v. l. 105 ). — [a] ) K1. 4 ये तु ते; K7 ये त्वस्य; D4 यच्चान्यद्; M1. 6. 7 येप्यन्ये ( for ये त्वन्ये ). D5 -सदसि ( for -सदने ). — [b] ) D7 T G1. 3. 6 समाहिताः; G2 °हताः ( for °गताः ). — [c] ) K7 प्र-; D7 G2 सं- ( for तत् ). — [d] ) D5 ब्रह्म- ( for वेद- ). K1. 4 -सम्मितं ( for -संमितम् ).

107 K3 om. up to सकाशा ( cf. v. l. 105 ). — [a] ) K3 श्रुत्वा ( for सूर्यश्च ). K3 वै; K6 Bo. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 5. 8 तु ( for च ). K1. 4 ततः सूर्यश्च श्रुत्वा वै. — [b] ) K1. 2. 4 ऋषीणां ( for श्रुत्वा वै ). Da3 भावीतात्मनां; D4 भावितान्वयं. — G2 om. ( hapl. ) 107[e]–108[f]. K4 repeats 107[cd] after 108. D5 reads 107[cd] twice. — [c] ) Da3. a4 आत्मनु- ( for आत्मानु- ). D3 -जीविनां ( for -गामिनां ). K6 चेद्; K6 ( also ) Bo. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 5 ( first time ). 8 M5 राजन् ( for ब्रह्म ). D5 ( second time ) वेदानुगामिना ब्रह्म; D7 T G1. 3. 6 आत्मानुगान्स्थितान्राजन्; M1. 6. 7 °न्मुनिगणान्. — [d] ) K6 वै भारत ( hypermetric ); Bo. 6–9 Da3. a4 Dn1. n4 D5 D2. 3. 5. 8 वै ततः ( B9 °दा ); D7 T G1. 3. 6 M1. 5–7 तत्वतः ( for भारत ).

108 G2 om. 108 ( cf. v. l. 107 ). — [a] ) K1. 2. 4 षष्टिमृषि-; K6 M1. 5–7 षट्षष्टिं हि; K7 षट्च षष्टि-; Dn4 षट्षष्टी हि; Ds1 षट्षष्टि हि; D5 ततः षष्टि-; D7 T G1. 3. 6 अष्टाशीति- ( for षट्षष्टिर्हि ). ❀ C3: षष्टि-सहस्राणि वालखिल्यानाम् । ❀ — [b] ) K7 D4. 5. 7. 9 T G1. 6 M1. 5–7 मुनीनां ( for ऋषीणां ). K1. 2. 4 षष्टिमृषि-वातानि च. — B9 om. ( hapl. ) 108[cdef]. 108[cde] is damaged in B8. — [c] ) M5 तपसो ( for °तो ). Dn4 Ds1 D5 T1 लोका ( for लोकान् ). — [d] ) K1 निर्मितां. M5 वै ( for ये ). — [f] ) K6 Da3 श्रुत्वा वै ( for सर्वेषां ). — After 108, K4 repeats 107[cd].

109 [a] ) K1. 2 B1 सूर्याभि- ( for °नु- ). D7 -गामिनस् ( for °मिस् ). — [b] ) K6 तन् ( for तैर् ). K1. 2. 4. 7 D4. 5. 9 ऋषिभिर्भावितात्मभिः. — [d] ) D7 T1 G3. 6 शृण्वते ( D7 °तो ) चैत( D7 वै त )दुत्तमं; T2 G1 शुण्वंतश्चैतदुत्तमं; G4 आविता वै तदुत्तमं.

110 D5 om. 110[a]–115[b]. — [a] ) K7 D4. 9 देवतानां ( for देवानां तु ). — [b] ) K3 श्रुत्वामितौ; K4 Da3 श्रुत्वामितो ( for °सितो ). M5 मुनिः ( for द्विजः ). — [c] ) K6 B6 Da3. a4 वै तत्तु ( for राजेन्द्र ). — Da4 om. 110[d]. — [d] ) The portion from पितृणां up to लोकाः ( in 12. 327. 5[a] ) is lost in Da3 on missing fol. K1. 2. 4 D7 T G1–3. 6 M5 पितॄन्वै; K7 D4. 9 पितॄन्स; M1. 6. 7 पितरं ( for पितॄणां ). K1. 2. 4 द्विज-; Dn4 मति- ( for मुनि- ). K1. 2. 4 Bo. 8 Dn4 Ds D3 G2 -सत्तम; T2 °मं ( for °मः ). — After 110, D7 T G1–3. 6 ins. :

854* एवं परंपराख्यातमिदं शंतनुना श्रुतम् ।

111 Da3 missing ( cf. v. l. 110 ). D5. 7 om. 111 ( for D5, cf. v. l. 110 ). K7 D4. 9 read 111[ab] twice. — [ab] ) K6. 7 ( first time ) Bo. 6–9 Da4 Dn4 Ds1 D2. 3. 8 शांतनुः ( for शं° ). K7 D4. 9 ( all second time ) पितरः श्रावयामासुः पितरं मम शां( K7 शं )तनुं. — [c] ) K4. 6 Bo. 6–9 Da4 Dn1. n4 D3 D2. 3. 8 [अ]पि ( for [ए]तत् ). K6 तत्; K7 D4. 9 M1. 6. 7 तु ( for च ). — [d] ) Da4 कीर्तितस्तव भारतः. — After 111, K7 D4. 9 ins. :

855* नारदाच्चैव देवर्षेः पुराणमहमाप्तवान् ।

C. 12. 12989
B. 12.340(39).125
K. 12. 348. 74

सर्वे ते परमात्मानं पूजयन्ति पुनः पुनः ॥ ११२
इदमाख्यानमार्षेयं पारंपर्यागतं नृप ।
नावासुदेवभक्ताय त्वया देयं कथंचन ॥ ११३
मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै ।
यानि श्रुतानि धर्म्याणि तेषां सारोऽयमुद्धृतः ॥ ११४
सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतम् ।
एवमेतत्पुरा विप्रैः कथामृतमिहोद्धृतम् ॥ ११५
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥ ११६
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ११७
मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ।
जिज्ञासुर्लभते कामान्भक्तो भक्तगतिं व्रजेत् ॥ ११८
त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥ ११९
ब्रह्मण्यदेवो भगवान्प्रीयतां ते सनातनः ।

---

112 Das missing (cf. v. l. 110). $D_5$ om. 112 (cf. v. l. 110). $D_7$ reads $112^{ab}$ and repeats $112^{cd}$ after 118. T $G_{1-3, 6}$ repeat 112 after 118. — $^a$) $G_2$ (first time) असुरैर् (for सुरैर्वा). $K_{1, 2}$ ऋषिभिर् (for मुनि°). $D_7$ $G_2$ (second time) चैव; T $G_{1-3, 6}$ (all first time) चापि (for वापि). — $^b$) $K_7$ यदिदं; $T_1$ (first time) वै यदि (for यैरिदं). $T_2$ (first time) श्रुता (for श्रुतम्). — $^c$) $K_7$ $D_{4, 9}$ श्रुत्वा ते; $D_7$ T $G_{1-3, 6}$ (all second time) ते सर्वे (by transp.). — $^d$) $K_7$ $D_{4, 9}$ भावयंति; $Dn_{1, n4}$ $D_8$ $D_{2, 3, 8}$ पूजयंते (for °यन्ति). $K_1$ यथा विधिः; $K_{3, 4}$ यथाविधि; $Dn_{1, n4}$ $D_8$ $D_{2, 3, 8}$ समंततः (for पुनः पुनः).

113 Das missing (cf. v. l. 110). $D_5$ om. 113 (cf. v. l. 110). $K_4$ repeats $113^{ab}$ after 118. — $^a$) $D_7$ T $G_{1-3, 6}$ transp. इदं and आख्यानं. $K_6$ आर्ष्येयं; $Dn_4$ आख्येयं; $D_4$ आख्यातं (for आर्षेयं). — $^b$) $Da_4$ नृपः; $D_7$ T $G_{1-3, 6}$ $M_{1, 5-7}$ नृषु (for नृप). — $^c$) $K_4$ -भक्ता च (for -भक्ताय). — $^d$) $G_2$ [आ]ख्येयं (for देयं). $K_4$ कथं च नः. — After 113, $K_{1, 2, 4}$ read 120. $D_7$ T $G_{1-3, 6}$ ins. after 113 : $K_{1, 2, 4}$ after 120:

856* आख्यानमुत्तमं चेदं श्रावयेद्यः सदा नृप ।
सदैव मनुजो भक्तः शुचिर्भूत्वा समाहितः ।
प्राप्नुयादचिराद्राजन्विष्णुलोकं सनातनम् ।

[(L. 2) $K_{2, 4}$ तं देवं; $D_7$ तथैव; $G_2$ तदैव (for सदैव).]

114 Das missing (cf. v. l. 110). $D_5$ om. 114 (cf. v. l. 110). — $^a$) $Dn_4$ मतौ (for मत्तो). $K_{1, 2, 4, 7}$ $D_{4, 9}$ [ऽ]न्यतश्च (for ऽन्यानि च). — $^b$) $K_6$ $D_7$ $T_3$ $G_{1, 2}$ च (for वै). — $^c$) $K_2$ श्रुत्वानि (for श्रुतानि). $K_6$ $B_{0, 6, 7, 9}$ $Da_4$ $Dn_{1, n4}$ $D_8$ $D_{2, 3, 8}$ सर्वाणि; $K_7$ $B_3$ $G_{1, 2}$ $M_{1, 7}$ धर्माणि (for धर्म्याणि).

115 Das missing (cf. v. l. 110). $D_5$ om. $115^{ab}$ (cf. v. l. 110). — $^b$) $K_7$ $B_0$ $D_{4, 9}$ $T_1$ $G_{2, 3, 6}$ उत्तमं (for उद्धृतम्). — $Ds_2$ reads $115^{cd}$ on marg. — $^c$) $D_5$ वृत्तैः (for विप्रैः). — $^d$) $G_3$ कथामयम् (for °मृतम्). $K_{1, 2, 4}$ अथ; $B_{1-9}$ $Da_4$ $D_8$ $D_5$ $T_1$ इव (for इह).

116 Das missing (cf. v. l. 110). — $^a$) $K_7$ $Da_4$ चैनं; $D_{4, 9}$ चैतत् (for चेदं). $K_{1, 2, 4}$ $D_{4, 5}$ श्रावयेत्; $K_7$ $D_9$ शृणुयात् (for पठते). — $^b$) $K_7$ चैवं; $D_9$ चैतत् (for चेदं). $K_{2, 7}$ $D_9$ श्रावयेत् (for शृणुयात्). $Da_4$ पुनः (for नरः). — $^c$) $T_2$ एकभावेनोपगत; $M_{1, 6}$ एकांतभावोपगतम्. — $^d$) $B_{6, 7}$ $Dn_{1, n4}$ $D_8$ $D_{2, 3, 8}$ एकांतेषु; $B_9$ एकांतसु-; $D_7$ °तिः सु-; $G_3$ °तः सु- (for °न्ते सु-).

117 Das missing (cf. v. l. 110). — $^a$) $K_{1, 2}$ महद्- (for महा-). — $^b$) $K_1$ भूता (for भूत्वा). $Dn_1$ चांद्रप्रभो.

118 Das missing (cf. v. l. 110). — $^a$) $K_{1, 2}$ मुच्येतांतस्; T $G_{1, 3, 6}$ मुच्येतार्तस्; $G_2$ °तासौ (for °दार्तस्). $K_7$ रोगान्; $D_4$ रागात् (for रोगात्). — $^b$) $K_{1, 2}$ कथं (for कथाम्). — $^c$) $B_6$ (marg.) ज्ञानं; $D_5$ कामं; $D_7$ T $G_{1-3, 6}$ भक्तिं (for कामान्). — $^d$) $K_{1, 2}$ भक्ति-; $Da_4$ $D_7$ मुक्त-; $G_2$ मुक्ति- (for भक्त-). $D_7$ T $G_{1-3, 6}$ $M_{1, 6, 7}$ लभेत् (for व्रजेत्). — $K_4$ repeats $113^{ab}$ after 118. $D_7$ reads $112^{ab}$ and repeats $112^{cd}$ after 118. T $G_{1-3, 6}$ repeat 112 after 118.

119 Das missing (cf. v. l. 110). — $^a$) $Dn_4$ त्वयासि; $M_{1, 7}$ ययापि (for त्वयापि). — $^b$) $K_{1, 2}$

युधिष्ठिर महाबाहो महाबाहुर्जनार्दनः ॥ १२०
वैशंपायन उवाच ।
श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय ।
भ्रातरश्चास्य ते सर्वे नारायणपराभवन् ॥ १२१
जितं भगवता तेन पुरुषेणेति भारत ।
नित्यं जप्यपरा भूत्वा सरस्वतीमुदीरयन् ॥ १२२
यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः ।
स जगौ परमं जप्यं नारायणमुदीरयन् ॥ १२३
गत्वान्तरिक्षात्सततं क्षीरोदममृताशयम् ।
पूजयित्वा च देवेशं पुनरायात्स्वमाश्रमम् ॥ १२४

C. 12. 13002
B. 12. 340(38). 137
K. 12. 348. 87

इति श्रीमहाभारते शान्तिपर्वणि षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥

---

Ds1 M1 अभ्यर्च्य- (for °र्च्यः). K1.2.4 M7 पुरुषोत्तमं; K7 °त्तम. — After 119ab, K1.2.4 ins.:

857* वासुदेवं महात्मानं श्रोतव्यं विधिपूर्वकम् ।

— d) D7 T G1-3.6 भवेत् (for गुरुः).

120 Da3 missing (cf. v. l. 110). K1.2.4 read 120 after 113. — a) K1 -देहो; Da4 -देवा (for -देवो). — b) Dn4 प्रापतां (for प्रीयतां). G3 जनार्दनः (for सनातनः). M5 (*sup. lin.* as in text) चतुर्मूर्तिः सनातनः. — c) K1.2.4 महासत्त्वो; T1 G3.6 °भागो (for °बाहो). — d) K6.7 B0.6-9 Da4 Dn1.n4 Ds1 D2-5.7-9 महाबुद्धिर् (for °बाहुर्). — After 120, B6.7 ins.:

858* पूजनीयो सदाव्यग्रो मुनिभिर्वेदपारगैः ।

On the other hand, K1.2.4 ins. 856* and B8 D7 T G1-3.6 ins. 859* after 120.

121 Da3 missing (cf. v. l. 110). — b) Da4 जनमेजयः. — c) D7 चात्र (for चास्य). K7 सर्वैर् (for सर्वे). D4.5.9 भ्रातृभिः सहितः सर्वैर् (D4 °र्वे). — d) K1.2.4 बभुः (for [अ]भवन्). K7 B0 D4.5.9 नारायणपरोभवत् (B0 D4 °न्).

122 Da3 missing (cf. v. l. 110). — a) T2 देव; G2 चैव (for तेन). — b) K6 पुरुषेन. D5.7 [इ]ह (for [इ]ति). Da4 भारतः. — c) K2.6 B0 Dn4 D8 D5.7 T1 G3.6 जप्यपरो; K7 D4.9 जाप्यपरो (for जप्यपरा). — d) K1.2 B8 (marg.) Dn4 M1.5.6 सरस्वतिम्; K7 Ds1 D4.9 T2 G1.2 C8 (gloss: सरस्वतीप्रोक्तम्) सारस्वतम्; T1 G3.6 नारायणम् (for सरस्वतीम्). K1.2 B8 (marg. as in text) T G1.3.6 उदैरयन्; K7 D4 उदीरयेत् (for °रयन्).

123 Da3 missing (cf. v. l. 110). K1 om. (hapl.) 123. — a) T2 [s]स्त्यस्माकं; M1.6.7 [s]स्य° (for ह्य°). K7 कुरु-; Da4 Ds1 D4.9 G1 M1 गुरु- (for गुरुः). — b) D7 T1 G1-3.6 प्रभुः; T2 प्रभुं (for मुनिः). — c) Ds2 transp. स and जगौ. B6 G3 पारमं (for परमं). Da4 प्राप्य (for जप्यं). Dn1.n4 D2.6.8 जगौ परमकं जप्यं.

124 Da3 missing (cf. v. l. 110). — a) K1.2 अंतरिक्षं; K6.7 B0.6-9 Ds1 अंतरीक्षात्. K1.2 D4.5.9 स तदा (for सततं). — b) K2 अमृताचयं; Da4 °श्रयं; D7 T G1-3.6 M1.5-7 °लयं (for °शयम्). — c) D5.9 तु; D7 T2 G1.2 [अ]थ (for च). — d) K1 स्वमाश्रयं; T1 G3.6 °लयं (for °श्रमम्). — K6 B0.6.7.9 Da4 Dn1.n4 Ds2 D2.3.5.8 M1.5-7 editions ins. after 124: B8 D7 T G1-3.6 after 120:

859* भीष्म उवाच ।
एतत्ते सर्वमाख्यातं नारदोक्तं मयेरितम् ।
पारंपर्यागतं ह्येतत्पित्रा मे कथितं पुरा ।

[ B8 om. the ref. — (L. 1) M1 आख्यानं (for °तं). B6 (marg. as above).7 Da4 समीरितं; T1 G3.6 मया शुभं; T2 मयादितः; G1 मयैरितं (for मये°). — B8 om. line 2. K6 B0.7.9 Da4 Dn1.n4 Ds2 D2.3.8 repeat line 2 after line 6 of 860*. — (L. 2) Dn4 पारंपर्यागते. T1 G3.6 चैतत्; G2 ह्येतं (for ह्येतत्). M5 भीष्मेण (for पित्रा मे). ]

— K6 B0.6-9 Da4 Dn1.n4 Ds2 D2.3.5.7.8 T G1-3.6 cont.: K1.2.4.7 Ds1 D4.9 editions ins. after 124:

860* सूत उवाच ।
एतत्ते सर्वमाख्यातं वैशंपायनकीर्तितम् ।
जनमेजयेन यच्छ्रुत्वा कृतं सम्यग्यथाविधि ।
यूयं हि तप्ततपसः सर्वे च चरितव्रताः ।
सर्वे वेदविदो मुख्या नैमिषारण्यवासिनः ।
शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः । [5]
यजध्वं सुहुतैर्यज्ञैरात्मानं परमेश्वरम् ।

[३२७

C. 12. 13007
B. 12. 341(40). 1
K. 12. 349. 1

जनमेजय उवाच ।

कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः ।
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ १
निवृत्तं चास्थितो धर्मं क्षेमी भागवतप्रियः ।
प्रवृत्तिधर्मान्विदधे स एव भगवान्प्रभुः ॥ २
कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः ।
कथं निवृत्तिधर्माश्च कृता व्यावृत्तबुद्धयः ॥ ३
एतं नः संशयं विप्र छिन्धि गुह्यं सनातनम् ।
त्वया नारायणकथा श्रुता वै धर्मसंहिता ॥ ४
इमे सब्रह्मका लोकाः ससुरासुरमानवाः ।

---

[ Bom. Kumbh. ed. सौतिर् (for सूत). —(L. 1) B9 D7 T G1-3. 6 वः (for ते). Da4 वैशंपायनमिरीतं (sic) (for the post. half). —(L. 2) B7 Dn1. n4 Ds2 D2. 3. 8 G2 तत् (for यत्). D9 बुद्ध्वा; G2 कृत्वा (for श्रुत्वा). K7 D9 श्रुतं (for कृतं). B9 सर्वं (for सम्यग्). K7 यथा विधिः. —(L. 3) D6 T1 G3. 6 सु- (for हि). K7 D4. 5. 9 G2 सु-; T G3. 6 ते (for च). —(L. 4) D4 वेदविदा. T1 G3. 6 विप्रा (for मुख्या). D7 T G1-3. 6 नैमिशारण्य-. —(L. 5) Da4 सौनकस्य. K7 D4 महासत्रे (for °सत्रं). Da4 दिवौकसः (for द्विजोत्तमाः). —(L. 6) K3 सुमतैर् (for सुहु°). K6 B6. 7 Da4 Dn1. n4 Ds D2. 3. 8 शाश्वतं (for आत्मानं). — After line 6, K6 B6. 7. 9 Da4 Dn1. n4 Ds2 D2. 3. 8 repeat line 2 of 859*. ]

Colophon. Ś1 V1 Da3 D6 missing: K1. 5 B1-5 Da1. a2 Dn2. n3 D1 G4. 5 M2-4 absent. — *Sub-parvan :* K1. 2. 4. 6. 7 B6. 6-9 Da4 Dn1. n4 Ds D2-5. 7-9 T G1-3. 6 M1. 5-7 मोक्षधर्म. — *Adhy. name :* K1. 2. 4. 6. 7 B6. 6-9 Da4 Dn1 Ds D2. 3. 8 M6 नारायणीयं; D4. 5. 9 नरनारायणीयं; T1 नारायणीयोपाख्याने जन्मरहस्यं; T2 G2. 6 नारायणीये जन्मरहस्यं (G2 जन्मजरारहस्यं); G1 नारायणीये अवताररहस्यं; M1. 6. 7 नारायणीये भगवद्दर्शनं. — *Adhy. no.* (figures, words or both): K6 65; B7 Dn4 163; B8 Dn1 Ds2 T1 G6 165; D8 G2 M1. 6. 7 160; T2 178; G1 164; G3 190; M5 196. — *Śloka no.:* Da4 121; Dn1 140; Dn4 139; D8 40.

## 327

☞ This adhy. is missing in Ś1 V1 D6 (cf. v. l. 12. 321. 14; 318. 1; 283. 15).

1 Da3 is missing up to लोकाः (in 5a) (cf. v. l. 12. 326. 110). K1. 2. 4. 6. 7 B6. 6-9 Da4 Dn1. n4 Ds D2-5. 7-9 T G1-3. 6 शौनक (for जनमेजय). —b) T1 G6 अग्र्यहरः. K1. 4. 7 D4. 5. 9 स्मृतः (for प्रभुः). K2 यज्ञेशोनुग्रहः स्मृतः. —c) K1 यज्ञधारे; K7 D4. 9 °हारी (for °धारी). D4. 9 [इ]व (for च). G3. 6 स कथं (for सततं). —d) D8 M5. 6 -वेदांगधृक्; D7 T G1-3. 6 °कृत्; M1. 7 °सृक् (for °वित्). K4 B9 D7 G1. 2 तदा; M5 कथं (for तथा). K7 D4. 9 देवभागा- (K7 °ग)प्रभुक्तया.

2 Da3 missing (cf. v. l. 1). —a) K1 निर्वृत्तां; K6. 7 B6. 8. 9 G2 निवृत्तिं; Da4 °त्तां; Dn1 °त्ते (for °त्तं). D4 वास्थितो (for चा°). Dn1 धर्मे (for धर्मं). —b) K1 क्षमी (for क्षेमी). K7 -प्रभुः (for -प्रियः). K6 B6. 6-9 Da4 Dn1. n4 Ds D2-5. 8. 9 M1. 6. 7 क्षमी (K6 B6. 6. 7. 9 Da4 D9 क्षेमी; B8 M1. 6 क्षेमं; Dn4 Ds1 क्षमा; M7 क्षमं) भागवतः (K6 °तां; M6 °तं) प्रभुः; D7 T G3. 6 क्षेत्री भागवतः (T2 °तं) कथं; G1 क्षेत्री भावगतः कथं; G2 मोक्षं भागवतः कथं. —c) K1. 2. 4 प्रवृत्त-; K6 B6. 6-9 Da4 Dn1. n4 Ds D2. 3. 5. 8 निवृत्ति- (for प्र°). —d) G2 विभुः (for प्रभुः).

3 Da3 missing (cf. v. l. 1). —a) K1. 2 कथं प्रवृत्तधर्मेण. —b) M1 भागहा (for भागार्हा). —c) K1 निर्वृत्त-; K2. 4 D5 निवृत्त- (for °त्ति-). K1 -धर्मश्च; D7 T G1-3. 6 -धर्मेषु (for -धर्माश्च). —d) K2 कृत- (for कृता). Ds2 D4. 9 व्यावृत्ति-; G2 [अ]-भ्यावृत्त- (for व्यावृत्त-). Da4 कृताव्यकृतबुद्धयः.

4 Da3 missing (cf. v. l. 1). —a) K1. 2. 4. 7 D4. 5. 7. 9 T G1-3. 6 छिंधि; K6 B6. 7. 8 (marg. as in text). 9 Da4 Dn1. n4 Ds D8 सूत; D2. 3 सौते (for विप्र). —b) K1. 2. 7 D4. 5. 7. 8 T G1-3. 6 सौते (for छिन्धि). D9 सनातने. —c) Ds2 (by corr.) D2. 4. 5. 7. 9 M1. 5-7 -कथाः; D8 lacuna (for -कथा). G3 त्वया नारायणाच्छ्रुत्वा. —d) K3 श्रुत्वा (for श्रुता). K4

क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ।
मोक्षश्चोक्तस्त्वया ब्रह्मनिर्वाणं परमं सुखम् ॥ ५
ये च मुक्ता भवन्तीह पुण्यपापविवर्जिताः ।
ते सहस्रार्चिषं देवं प्रविशन्तीति शुश्रुमः ॥ ६
अहो हि दुरनुष्ठेयो मोक्षधर्मः सनातनः ।
यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ॥ ७
किं नु ब्रह्मा च रुद्रश्च शक्रश्च बलभित्प्रभुः ।
सूर्यस्ताराधिपो वायुरग्निर्वरुण एव च ।
आकाशं जगती चैव ये च शेषा दिवौकसः ॥ ८
प्रलयं न विजानन्ति आत्मनः परिनिर्मितम् ।
ततस्तेनास्थिता मार्गं ध्रुवमक्षयमव्ययम् ॥ ९
स्मृत्वा कालपरीमाणं प्रवृत्तिं ये समास्थिताः ।

C. 12. 13019
B. 12. 341(40). 12
K. 12. 349. 12

---

B6. 8 Da4 Dn1. n4 D2. 4. 5. 7–9 T2 G1. 2 M1. 5–7 -संहिताः; D8 -संज्ञिताः; D8 -संश्रिता ( for -संहिता ). — After 4, K1. 2. 4. 6. 7 Bo. 6–9 Da4 Dn1. n4 D8 D2–5. 7–9 T G1–3. 6 Cn editions ins.:

861* सूत उवाच ।
जनमेजयेन यत्पृष्टः शिष्यो व्यासस्य धीमतः ।
तत्तेऽहं कीर्तयिष्यामि पौराणं शौनकोत्तम ।
श्रुत्वा माहात्म्यमेतस्य देहिनां परमात्मनः ।
जनमेजयो महाप्राज्ञो वैशंपायनमब्रवीत् ।

[ G1 om. the ref. K6 Bo. 8 ( marg. as above ) Dn1. n4 D8 D2. 3. 8 सौतिर् ( for सूत ). — ( L. 1 ) D7 तत् ( for यत् ). — ( L. 2 ) K7 D4. 5. 9 T1 G3. 6 तदहं; Dn4 नन्वेहं ( for तत्तेऽहं ). K1. 2. 4 G1 ( *sup. lin.* as above ) संप्रवक्ष्यामि; K6 Bo. 8. 9 Dn1. n4 D8 D2. 3. 8 कथयिष्यामि ( for कीर्त° ). K1. 2. 4 पुराणं; Da4 पौराणां ( for °णं ). K2 शौणकोत्तम; K6. 7 B6–9 Dn1 D4. 5 शौनकोत्तमं; Da4 °पमं; D7 T2 G1. 2 °त्तरं ( for °त्तम ). — ( L. 3 ) K2 महात्म्यम्; Da4 माहात्मम्. Bo. 8 देहिनः; Cn ( gloss: परमात्मनः ) °नां ( as above ). Bo om. ( hapl. ); T2 परमात्मकं ( for °त्मनः ). — ( L. 4 ) B9 जनमेजय- ( for °जयो ). ]

5 Da3 is missing up to लोकाः ( cf. v. l. 1 ). Before 5, K1. 2. 4. 6. 7 Bo. 6–9 Da4 Dn1. n4 D8 D2–5. 7–9 T G1. 3. 6 ins. जनमेजय उवाच. — a ) Da4 G2 सं- ( for स- ). — b ) B9 -मानुषाः ( for -मानवाः ). — c ) K2 क्रियास्वत्युदयोक्तासु; K6 °सु विधिनोक्तासु; T1 G3. 6 °स्वभ्युदयोत्थासु; T2 क्रियाः साभ्युदयोक्तासु. — d ) K1 सुक्ता; K7 Bo. 8 शक्ता; B9 शक्त्या ( for सक्ता ). K1. 2. 4 B9 D9 ( marg. ) पश्यंति ( for दृश्यन्ति ). K1. 2. 4 सर्वतः ( for °शः ). — e ) Da4 चोक्तास्; D4 चोक्तं. — f ) M7 निर्वाणः ( for °णं ).

6 a ) G2 एव ( for ये च ). K2. 4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 तु ( for च ). D4. 9 M1. 6. 7 भक्ता ( for मुक्ता ). B8 ( marg. ) वहंति; Dn4 भवंति ( for भवन्ति ). K7 ये भक्ता च भवंतीह. — c ) ❀ Cn: सहस्रार्चिषं, सूर्यान्तर्यामिणमनन्तचिद्रूपं वा । ❀ — d ) K4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 [इ]ह ( for [इ]ति ). K1. 2. 4. 6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 T2 M6 शुश्रुम ( for °मः ).

7 a ) K4 Bo. 8 ( marg. as in text ) Dn1. n4 D8 D2. 3. 8 कथं ( for अहो ). B8 ( marg. ) [ऽ]ति- ( for हि ). K2 T2 दुरनिष्ठेयो ( for °नुष्ठेयो ). — b ) K7 D9 मोक्षो ( for मोक्ष- ). K1. 2. 4 -मार्गः; B7 -धर्म- ( for -धर्मः ). M7 सनातनं ( for °तनः ). — B9 om. 7cd. — d ) K4 कव्यकव्य- ( for हव्य° ). K7 [ऽ]भवत्; D5 °जन्; G1 [ऽ]वहन्; G2 भवान् ( for ऽभवन् ).

8 a ) K2 न; K4 Dn1 D8 D2. 8 T1 G2. 3. 6 च; K6 Bo. 6–8 Da3. a4 Dn4 D8 तद्; B9 lacuna; D7 T2 G1 तु ( for नु ). K1. 2. 7 D4. 9 [अ]थ रुद्रो वा; Da3 M1 च रुद्राश्च. D5 किं ब्रह्मा चाथ रुद्रो वा. — b ) K1 lacuna; K3. 7 D3. 5. 9 वा ( for च ). B7. 8 बलं- ( B8 °लि )भिः; T2 G1 M7 वलभित्. D5 विभुः ( for प्रभुः ). — d ) Da4 अग्नीर्; D4 अग्निर्. K1 वारुण. — e ) T1 G3. 6 आकाशो ( for °शं ). D7 जगतिश्च; G1 पृथिवी.

9 a ) T G1–3. 6 प्रळयं. — b ) K1. 2. 4. 7 चात्म( K2 °त्मा )नः; D4. 5. 9 T1 G2. 3. 6 ह्या° ( for आ° ). T1 पर- ( for परि- ). B1 -निर्मितः; D5 -कीर्तितं ( for -निर्मितम् ). — c ) Da1 यतस् ( for ततस् ). B7 तेनास्थितो; B8 तेनाश्रिता; D3. 9 तं नास्थिता; D5 तमा° ( for तेना° ). D7 T G1–3. 6 M1. 5–7 य( M1. 5–7 अ )तस्तं वास्थि( G2 °स्ति )ता धर्मं ( M5 मार्गं ). — d ) Da3 Dn1. n4 D8 D2. 3. 8 T2 G2 अक्षरम् ( for °यम् ).

10 a ) K6 स्मृता; K7 D4. 9 M5 स्मृतं; Bo. 6–9 Da3 Dn4 D8 D2. 3. 8 स्मृतिं; Da4 Dn1 D5 स्मृति-; M1. 6. 7 स्मृत- ( for स्मृत्वा ). K6 -परीमाने; Da4 -परिमाणं. — b ) D5 वृत्तियेन; M1. 6. 7 प्रवृत्ता ( M6 °त्तं ) ये ( for °त्तिं ये ). D7 T G1–3. 6 ते ( for ये ). K2 समाहृताः; K6 B7. 9 Da3. a4 D4. 9 M5 °श्रिताः; D5

C. 12. 13019
B. 12. 341(40). 13
K. 12. 349. 12

दोषः कालपरीमाणे महानेष क्रियावताम् ॥ १०
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम् ।
छिन्धीतिहासकथनात्परं कौतूहलं हि मे ॥ ११
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज ।
किमर्थं चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ॥ १२
ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ।
ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥ १३

वैशंपायन उवाच ।

अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर ।
नातप्ततपसा ह्येष नावेदविदुषा तथा ।
नापुराणविदा चापि शक्यो व्याहर्तुमञ्जसा ॥ १४
हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ॥ १५
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥ १६
एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् ॥ १७
वेदानध्यापयामास महाभारतपञ्चमान् ।

---

°स्थिता; M1.7 समन्विताः (for समास्थिताः). —c) Da4 T2 दोष-; D5 येषु; D7 T1 G1-3.6 एष (for दोषः). D4 reads from काल up to हास (in 11c) twice. K6.7 D4 (both times).9 -परीमाणं; Bo. 6-9 Da3 Dn4 Ds2 (before corr.) D5.7 T1 G1-3.6 M5.6 °माणो; D8 T2 °णामो (for °माणे). M1.7 दोषकाल-परीमाणो. —d) D7 T1 G2.6 महादोषः; T2 G1.3 M5 महान्दोषः (for महानेष).

11 For the repetition in D4, cf. v. l. 10. —a) K1.2.4.7 Ds1 D9 एवं (for एतन्). K1.2.4.7 D4 (both times).5.9 ब्रह्मन्; G3 विप्रा (for विप्र). —b) Dn4 इवार्थिव (for °र्पितम्). —c) G2 -कतनात् (for -कथ°).

12 D4 repeats 12 after भागं (in 13a). —b) K2 कृतुषु (sic). —c) K6 om. (hapl.) from किमर्थं up to द्विज (in 13b). K7 D9 चावरो; D4 (both times) चावरा; D7 G1-3.6 M7 चाध्वरैर् (for °रे). —d) K7 D4 (both times).9 M1.7 यजते; B8 D5 T G1-3.6 M5.6 यजंते; Da4 Dn1 ईज्यंते; Ds1 इत्यंते; D7 सृजंति (for इज्यन्ते). G2 [s]पि (for त्रि-). Da4 -दिवौकसं.

13 For the repetition in D4, cf. v. l. 12. K6 om. up to द्विज (cf. v. l. 12). —a) K1.2.4 Bo.8 Da4 न; K7 हि; D4.9 तु (for प्र-). K7 Da3 Dn4 D9 -गृह्णंति. D7 T G1-3.6 ये भागं प्रतिगृह्णंति. —b) Da4 -सत्तमः. K1.2.4 यज्ञे ब्रूहि द्विजोत्तम. —c) B8 D4 ये यजतो (for ते यजन्तो). —d) G2 कस्यै (for कस्य). K1 D5.7 T2 G1.2 ददाति; B9 हरंति (for ददन्ति). K7 D4.5.9 च (for वै).

14 a) K7 महा (for अहो). K1.2.4.7 गूढो महा-; B9 अहो मूढ-; M5 गूढतरः (for °तमः). D5 om. from मः up to कथ (in 15a). —b) Bo.7.9 जनेश्वरः; T G1.3.6 जनाधिप; G2 नराधिप (for जनेश्वर). —c) D7 न तप्त- (for नातप्त-). M6 -सहसा (for -तपसा). G2 M6 ह्येषा (for ह्येष). —b) K1 नाविदे (for नावेद-). —e) K1 न पुराणविदा; Da4 नापुराणविद्. K1.2.4.7 D4.9 M5 वापि; K6 Bo.6-9 Da3.a4 Dn1.n4 D8 D2.3.8 चैव (for चापि). —f) M1.5-7 शक्यं (for शक्यो). K2 व्याहंतुम् (for व्याहर्तुम्). ❀ Ca: अञ्जसा, तत्त्वेन । ❀

15 D5 om. up to कथ (cf. v. l. 14). —b) K7 च सः (for गुरुः). —c) K7 यक्ष (for कृष्ण-). K1 -द्वैपायन-; G1 °यनं. —d) M7 देव- (for वेद-). K1.2.4.7 D4.5.9 G2 महामुनिः (for महानृषिः).

16 a) K1 Dn4 Ds1 सुमंतु-; M6 सुवंतुर्. K7 G2 जैमुनिश्; Dn4 -जैमिनीश्. —b) D5 पुलस्त्यः सु-; T2 G1.3 पैलश्चैव (for पैलश्च सु-). K7 -व्रताः (for -व्रतः). G2 पैलवश्च त्रयव्रतः. —c) K1.2.4.7 D4.5.7.9 T2 G1-3 तु; Ds2 [s]स्य (for वै). —d) G2 om. शुकः. K6 B7 Da3.a4 M1.6.7 तथा (for स्मृतः).

17 a) M5 शिष्यान् (for सर्वान्). —b) M5 सर्वान् (for शिष्यान्). B9 दयान्वितान्. K1.2 शिष्यान्दमशमान्वितान्. —c) M1.6.7 पंचाचार- (for शौचा°). —d) D4 यतेंद्रियान्; T1 G3.6 जितव्रतान्.

18 b) K1.4 -पंचमं (for -पञ्चमान्). —c) K7 D4.5.9 पुण्ये (for रम्ये). —d) G2 -गंधर्व- (for -चारण-). K2 -सेवते.

19 a) K1.2 Dn1 D4.9 T2 G1 M5 अभ्यसतां; M1.6.7 °सतो (for °स्यतां). Da3 देवान् (for वेदान्),

मेरौ गिरिवरे रम्ये सिद्धचारणसेविते ॥ १८
तेषामभ्यस्यतां वेदान्कदाचित्संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्तितः ।
ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत ॥ १९
शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतः श्रीमान्व्यासो वाक्यमुवाच ह ॥ २०
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
भूतं भव्यं भविष्यच्च जानीयामिति सत्तमाः ॥ २१
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ।
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ॥ २२
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ।
तच्छृणुध्वं यथाज्ञानं वक्ष्ये संशयमुत्तमम् ।
यथा वृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ॥ २३
परमात्मेति यं प्राहुः सांख्ययोगविदो जनाः ।
महापुरुषसंज्ञां स लभते स्वेन कर्मणा ॥ २४
तस्मात्प्रसूतमव्यक्तं प्रधानं तद्विदुर्बुधाः ।
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ॥ २५
अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।
सोऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ॥ २६

C. 12. 13037
B. 12. 341(40). 31
K. 12. 349. 30

—b) K7 B9 Da3 भवेत्; Dn4 महान्; D8 [ऽ]भवन्. — After 19ab, K6 ins.:

862* किं तु ब्रह्माथ रुद्रो वा देवता ऋषयस्तथा ।
प्रायः प्रवृत्तिमार्गस्थाः कस्य देवस्य शासनात् ।
के वै निवृत्तिमार्गस्थाः कस्य देवस्य शासनात् ।
के वै यजन्ते सर्वेऽपि क एषामीश्वरः परः ।

—c) K4 एव (for एष). M1. 6. 7 वर्येस् (for वै यस्). —e) K1 तस्य (for ततः). K6 वापि (for चापि). —f) T1 G3. 6 तद्वयाख्येयो (for तवाख्येयो). K6 [ऽ]यं; D7 हि; G2 [ऽ]पि (for ऽद्य). K7 D4. 9 M1. 5–7 यो( D9 M5. 6 यौ )गपद्येन भारत; Da4 तनाख्येयोह्यभारतः (sic); D5 तव्या *** भारत.

20 b) K1 -तपोनदः (for -तमोनुदः). —d) Dn4 प्राशो (for व्यासो). K1. 2. 4 अभाषत; Bo. 8 (marg. as in text) Dn1. n4 D8 D2. 3. 8 अथाब्रवीत् (for उवाच ह).

21 Before 21, B8. 9 ins. व्यास उवाच. B9 om. 21ab. —a) Dn4 प्रयाहि; D4. 5. 9 मयापि; G1 महान्हि; M6 lacuna (for मया हि). G2 सुतपस्; M6 lacuna; M7 समहत् (for सुम°). — Da3. a4 om. 21cd. —c) K7 B9 Dn4 भूत- (for भूतं). G2 भवद् (for भव्यं). K4 Bo. 6–9 Dn1. n4 D8 D2–5. 8 भविष्यं (for °ष्यच्). K6 भूतभव्यभविष्यं च. —d) K1. 2. 4. 7 Ds1 D4. 9 सत्तम; G2 सप्तमः (for सत्तमाः).

22 a) Dn4 तस्या; D5 सत्यं (for तस्य). Da3. a4 -तपसा (for -तपसो). —d) Dn4 क्षारोदस्य; M1. 6. 7 नार° (for क्षीरो°). ❀ Ca: अनुकूलतः, कूलसमीपे । ❀

23 a) D9 वैकालिकम् (for त्रै°). —c) D5 तं (for तत्). K1. 2. 4 यथाकामं; K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 °न्यायं (for °ज्ञानं). —d) Da4 Dn4 वक्षे (for वक्ष्ये). —f) K2 पृष्टं; Dn1 दृढं (for दृष्टं). Dn4 दांत- (for ज्ञान-).

24 Ds1 om. 24. 24ab is partly damaged in B6. —a) D4 reads from यं प्राहुः up to त्मेति (in 26b) twice. —b) K2 सांख्ये वेद-; K4 संख्यवेद-; Dn1. n4 D8 सांख्या योग- (for सांख्ययोग-). —c) K2 G1. 2 -संज्ञं (for -संज्ञां). Da4 सं-; T2 च (for स).

25 For the repetition in D4, cf. v. l. 24. —a) K1. 2 Da4 D5 यस्मात् (for त°). Ds1 D5 Cs (gloss: कार्योन्मुखं प्रवृत्तम्) प्रसृतम् (for प्रसू°). — M6 om. 25b. —b) K1. 2. 4. 6 Bo. 6–8 Da3. a4 Dn4 D8 D2. 3. 8 T2 M1. 5 तं; B9 Dn1 ते; D5 यद् (for तद्). —c) T G2. 3. 6 अव्यक्ते (for °क्ताद्). Da4 आपन्नं; G3 (also as in text) आत्मानं (for उत्पन्नं). ❀ Cv: अव्यक्तात्, अव्यक्ताख्यप्रधानसृष्टेरनन्तरम् । ❀ —d) Da4 -सृष्ट्यार्थम्. M1. 6. 7 ईश्वराः.

26 For the repetition in D4, cf. v. l. 24. —a) B6 (marg.) Da3. a4 लोकेश (for °षु). —b) G1 महाराज (for °नात्मा). K1 corrupt; K2 कीर्तिते; K4 कीर्त्यते (for कथ्यते). G3 महानाम्नेति कथ्यते. —c) G2 वा (for ऽसौ). K7 Bo Dn1. n4 D4. 5. 9 व्यक्तित्वम् (for व्यक्त°). B7 आपन्नं. —d) K1. 2. 4 निर्मिमीते (K2 °ति); Dn4 निर्ममेव; D7 °मेति; T2 °मेपि (for °मे च). — K1 om. 26e–27b. —e) K3. 4. 7 D4. 9 अहंकार; Da3. a4 योहंकार (for सोऽहं°). —f) Bo. 6. 8. 9 D8 M1. 6. 7 -तेजोगतो; Da3. a4 -तेजगतो (for

C. 12. 13038
B. 12.341(40). 32
K. 12. 349. 31]

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहंकारप्रसूतानि महाभूतानि भारत ॥ २७
महाभूतानि सृष्ट्वाथ तद्गुणान्निर्ममे पुनः ।
भूतेभ्यश्चैव निष्पन्ना मूर्तिमन्तोऽष्ट ताञ्शृणु ॥ २८
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महात्मा वै मनुः स्वायंभुवस्तथा ।
ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः ॥ २९
वेदान्वेदाङ्गसंयुक्तान्यज्ञान्यज्ञाङ्गसंयुतान् ।
निर्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः ।
अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ॥ ३०
रुद्रो रोषात्मको जातो दशान्यान्सोऽसृजत्स्वयम् ।
एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ॥ ३१
ते रुद्राः प्रकृतिश्चैव सर्वे चैव सुरर्षयः ।
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः ॥ ३२
वयं हि सृष्टा भगवंस्त्वया वै प्रभविष्णुना ।
येन यस्मिन्नधीकारे वर्तितव्यं पितामह ॥ ३३
योऽसौ त्वया विनिर्दिष्टो अधिकारोऽर्थचिन्तकः ।
परिपाल्यः कथं तेन सोऽधिकारोऽधिकारिणा ॥ ३४

---

-तेजोमयो ). B8 हितः ( for हि सः ). K6 Dn4 सर्वतो जगतो हितः.

27 K1 om. $27^{ab}$ (cf. v. l. 26 ). D7 T G1-3. 6 transp. $27^{ab}$ and $27^{cd}$. —$^{c}$) K1. 2. 4 D8 D5. 7 T G1-3. 6 अहंकाराद् ( for °कार- ). K7 D4. 9 -प्रयुक्तानि ( for -प्रसूतानि ). —$^{d}$) T2 G1. 2 M1. 5-7 पंच ( for महा- ). K6 Bo. 6-9 Da3. a4 Dn1 D3. 5. 5. 7. 8 पंचधा; D8 T2 G1. 2 भागतः; T1 G3. 6 भागशः ( for भारत ). Dn4 मही तानि च पंचधा.

28 Dn4 om. 28. —$^{a}$) K2 दृष्ट्वा; T1 सृष्टाद्य ( for सृष्ट्वा ). K2 Dn1 D8 D2. 3. 8 [ए]व; B8 (marg. as in text) वै; D7 T G1. 2 च ( for [अ]थ ). —$^{b}$) Bo. 6-9 Da3. a4 Dn1 D8 D2. 3. 8 तान् ( for तद्- ). T1 -गुणं ( for -गुणान् ). —$^{c}$) T G1-3. 6 M1. 5-7 निष्पन्नान्. K2 भूतेस्यद्वैव निष्पन्ना (sic); D8 तेभ्यश्चैव विनिष्पन्ना. —$^{d}$) K6 D5. 7 [ऽ]थ; Bo. 6 (marg.) Dn1 D8 D2. 3. 8 च ( for ऽष्ट ). K7 D4. 9 शृणुष्व तान्; B8 (orig.) च भार्गव ( for ऽष्ट ताञ्शृणु ). T G1-3. 6 M1. 5-7 अष्टौ ( G1 °ष्टा ) मूर्तिमतः शृणु.

29 $^{a}$) K6 B6 Da3 Ds1 M6 अत्रिः; B1 यत्रिः; D5 [अ]थात्रिः ( for चात्रिः ). —$^{b}$) Dn4 Ds1 पुलह- ( for °हः ). —$^{c}$) K6. 7 B6. 9 D4. 9 वशिष्ठः. K7 D4. 9 स ( for च ). —$^{d}$) K7 Ds1 G1 मनु- ( for मनुः ). Ds1 स्वायंभुवास्. —$^{e}$) Da3. a4 [ऽ]ष्टौ च; T1 G2. 3. 6 ह्यष्टौ ( for ऽष्टौ ता ). —$^{f}$) T1 G2. 3. 6 तासु ( for यासु ).

30 $^{a}$) K7 Bo Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 वेद- ( for वेदान् ). K2 -संयुक्ता; B7 -संभूतान्; Da4 -संयुक्तो ( for °क्तान् ). —$^{b}$) K4 Bo. 8. 9 Da3 Dn1. n4 D8 D2. 3. 8 यज्ञ-; D5 lacuna ( for यज्ञान् ). K7 -संमतान् ( for -संयुतान् ). — After $30^{ab}$, K7 D4. 9 ins. :

863* एतान्वै सुमहाभागानृषीँल्लोकपितामहान् ।
[ K7 सुमहाभागो ( for °भागान् ). ]

—$^{c}$) Dn1 निर्भिमे ( for निर्ममे ). K2 -सिद्धार्थं; Ds1 D7 T G1-3. 6 M6 C8 ( gloss : प्राणिसृष्टिजगत्प्रवाहसिद्ध्यर्थम् ) -सृष्ट्यर्थं ( for -सिद्ध्यर्थं ). —$^{d}$) C8 ( gloss : हिरण्यगर्भं ) -पितामहं ( for °महः ). —$^{e}$) K2 अष्टभ्यः. K7 B7 Da3. a4 तु ( for च ). —$^{f}$) G1 जितं ( for जातं ).

31 $^{a}$) T1 रोषात्मजो; M1 दोषात्मको ( for रोषा° ). —$^{b}$) D4. 9 योसृजत्; D7 T G1-3. 6 M1. 5-7 असृ° ( for सोऽसृ° ). M1 स्वयं ( for स्वयम् ). —$^{c}$) B6 ते ( for तु ). K7 D4. 9 एकादशैव ते रुद्रा. —$^{d}$) K7 D4. 9 विकारि-; Bo Da3 Dn1. n4 D8 D2. 3. 8 °र- ( for °राः ). K6 B6. 7. 9 Da3. a4 पौरुषाः ( for पुरुषाः ). K1. 2. 4 विकारः पुरुषः स्मृतः. ❀ C8 : एते रुद्राः पुरुषाः, पुरुषरूपधारीण्येकादशेन्द्रियाणीत्यर्थः । ❀

32 $^{a}$) Dn1 D4. 9 M1. 6 प्रकृतीश्; D7 T G1. 3. 6 प्राकृताश्; G2 प्रकृताश्च ( for °तिश् ). K1. 2. 4 रुद्राः प्रकृतयश्चैव; B8 ते च रुद्राः प्रकृतयः. —$^{b}$) K1 देव- ( for चैव ). —$^{d}$) Ds1 ब्रह्मणं. K1 Dn1 समुपास्थिताः; K4 समुपस्थितः.

33 Before 33, K6 Da3 ins. रुद्रा ऊचुः; Da4 रुद्रोवाच. —$^{a}$) K7 Bo. 8 Dn1. n4 D8 D2-5. 7-9 सृष्टा ( Bo Ds2 °ष्ट्या ) हि ( by transp. ); B7 हि सृष्ट्वा; T G1-3. 6 M1. 5-7 सृष्टास्तु. —$^{b}$) K1. 2. 4 [ए]व; Bo. 6-9 Da3. a4 Dn1. n4 D8 D2. 3. 8 च ( for वै ). —$^{c}$) Da4 अधिकारे. —$^{d}$) D7 G1. 2 वेदितव्यं ( for वर्ति° ).

34 $^{a}$) K1. 2. 4. 6 Bo. 6-9 Da3. a4 Dn1. n4 D8 D3.

प्रदिशस्व बलं तस्य योऽधिकारार्थचिन्तकः ।
एवमुक्तो महादेवो देवांस्तानिदमब्रवीत् ॥ ३५
साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः ।
ममाप्येषा समुत्पन्ना चिन्ता या भवतां मता ॥ ३६
लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः ।
कथं बलक्षयो न स्याद्युष्माकं ह्यात्मनश्च मे ॥ ३७
इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम् ।
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ॥ ३८
ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा ।
क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः ॥ ३९
ते तपः समुपातिष्ठन्ब्रह्मोक्तं वेदकल्पितम् ।
स महानियमो नाम तपश्चर्या सुदारुणा ॥ ४०
ऊर्ध्वं दृष्टिर्बाहवश्च एकाग्रं च मनोऽभवत् ।
एकपादस्थिताः सम्यक्काष्ठभूताः समाहिताः ॥ ४१

C. 12. 13053
B. 12. 34. [30]. 47
K. 12. 349. 46

2. 3 G2 [अ]भि-; D7 G1. 6 हि (for वि-). — $^{b}$) K1. 2. 4 स्वधीकारो; Bo Da3 Dn1 Ds D2. 3. 8 ह्यधि°; G1 M1. 5–7 अधि( M5 ह्यधी )कारे (for °कारो). K6. 7 B6. 8. 9 Da4 Dn4 D4. 9 अ( K7 स्व-; B8 Da4 Dn4 D4. 9 स्व )धिकारार्थचिंतकः ( D4 °काः ). — Dn4 D7 om. (hapl.) $34^{c}$–$35^{b}$; Da4 reads the same twice. — $^{c}$) Da4 (both times) परिपाल्य; G2 °पार्थ (for °पाल्यः). — $^{d}$) D3. 5. 9 हि कर्मणा; Cs (gloss: ताच्छीलिकतृणप्रत्ययान्तः [ Pāṇini 3. 2. 134–5 ] [ऽ]धिकर्तृणा (for ऽधिकारिणा). K6 Bo. 6–9 Da3. a4 (both times) Dn1 Ds D2. 3. 8 T G1–3. 6 M1. 5–7 साहंकारेण कर्तृणा; K7 ह्यधिकारो*कर्तृणा.

35 For the repetition in Da4, cf. v. l. 34. Dn4 D7 om. $35^{ab}$ (cf. v. l. 34). — $^{a}$) Da2 (by corr. as in text) M1. 7 प्रदिशस्य (for °शस्व). G2 तत्र (for तस्य). — $^{b}$) D6 सो (for यो). K1. 2 योधीकारार्थ-; M1. 6. 7 योधिकारेर्थ- (for °कारार्थ-). K1 T2 -चिंतकाः. — $^{c}$) K7 उक्ते (for उक्तो). ❀ Ca: महादेवः, देवेभ्यो महत्त्वेनोत्कर्षणयोगात् ब्रह्मैव। ❀ — $^{d}$) K1 देवास्; K2 G2 देवस्; T2 G1 देवैस् (for देवांस्). — After 35, K1. 2. 4 ins. an addl. colophon [ *Sub-parvan :* K1. 2. 4 मोक्षधर्म. — *Adhy. name :* K1. 2. 4 नारायणीयं ].

36 Before 36, K1. 2. 4. 6. 7 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 ins. ब्रह्मोवाच. — $^{a}$) G2 देवो (for देवा). — $^{c}$) K4 ममास्यैषा (for ममाप्येषा). — G2 om. $36^{d}$–$37^{c}$. — $^{d}$) K7 D4. 5. 9 या चिन्ता (by transp.); Da4 M1. 6 चिंतया. B8 T1 भवता (for °तां). Da4 मताः; Ds1 गता; D6 T1 मम; D7 T2 G1. 3. 6 M1. 5–7 इह (for मता).

37 G2 om. $37^{abc}$ (cf. v. l. 36). — $^{a}$) Da4 लोकं (for लोक-). K7 Dn1 D3. 4. 9 -त्रयस्य (for -तन्त्रस्य). Dn4 कृष्णस्य (for कृत्स्नस्य). — $^{b}$) Dn1 कार्य-; G1 कार्यं. T2 परिग्रहं. — $^{d}$) K1. 2. 4 चात्मनश्च; G2 स्वात्मनिश्च (for ह्यात्मनश्च). K7 D4. 9 M1. 5–7 तथा; Dn4 D7 च ये; T G1. 3. 6 च वै (for च मे). — After 37, K7 reads $39^{a}$ for the first time, repeating it in its proper place.

38 $^{a}$) K1. 2. 4 वयं; K7 D4. 9 ततः; G1 इतः (for इतः). K1. 2. 4 T G2. 3. 6 [ऽ]भि-; K7 D3. 9 [ऽ]तु-; D6 च; D7 G1 हि (for ऽपि). K7 G2 M1. 6 -गच्छाम; M7 गच्छेम (for गच्छामः). — $^{b}$) D5. 7 T G2. 3. 6 शरण्यं (for °णं). K6 B8 (marg. as in text) T1 G3. 6 -साक्षिकं (for °णम्). — $^{d}$) Dn4 मनो (for स नो). K7 Dn4 वक्षति. G2 तद् (for यद्).

39 Before 39, B8. 9 ins. व्यास उवाच. — $^{a}$) Da4 ब्राह्मणा (for ब्र°). — $^{b}$) Bo स्थिताः (for तथा). — K7 reads $39^{a}$ for the first time after 37. — $^{c}$) T1 G3. 6 तीरं (for कूलं). — $^{d}$) M1. 6. 7 -हितैषिणः (for -हितार्थिनः).

40 $^{a}$) B7 तपाः; Dn4 जयः. G2 तम् (for सम्-). — $^{b}$) M1. 7 ब्रह्मात्तं (for ब्रह्मोक्तं). K1. 2. 4 देव- (for वेद-). — $^{c}$) D4. 9 T2 सु-; M1. 6. 7 सा (for स). G2 तमहं नियमो नाम. — $^{d}$) Dn4 तपश्च्यर्या. K1. 2. 4 Bo. 8 Dn1. n4 Ds D2. 3. 5. 8 T1 G3. 6 सुदारुणः (for °णा).

41 $^{a}$) K6. 7 Dn1 Ds1 D2–5. 8. 9 G1. 2 ऊर्ध्वं-; Bo. 6–9 Da3. a4 T1 G3. 6 M1. 5–7 ऊर्ध्वा; Dn4 ऊर्ध्वे; D7 औध्र्वं- (for ऊर्ध्वं). K6. 7 Ds1 D3. 9 -दृष्टि- (for दृष्टिर्). K4 बाहुधिश्च (for बाहवश्च). T2 ऊर्ध्वेदृग्बाहवश्चैव. — $^{b}$) B3 (marg. as in text). 9 एकाग्रश्च (for °ग्रं). D2. 8 [ऽ]भवन्. K1. 2. 4 तथैकाग्रं मनो भवे( K1 °व )त्; K6. 7 D4. 5. 7. 9 T G1–3. 6 M5 एकाग्रमनसोभवन्. — $^{c}$) K1. 2 Da3. a4 Dn4 एकपादा; K4. 6 Bo. 6–9 Dn1 Ds D3. 5. 8 °पादाः; G1 °पादः (for °पाद-). G1 सदा; G2 -स्थितः (for -स्थिताः). Bo. 8. 9 Dn1. n4 Ds D2. 3. 8 सर्वे (for सम्यक्). — $^{d}$) G2 प्रादुर्भूताः (for काष्ठभूताः).

C. 12. 13054
B. 12. 341 (40). 48
K. 12. 349. 47

दिव्यं वर्षसहस्रं ते तपस्तप्त्वा तदुत्तमम् ।
शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम् ॥ ४२
भो भोः सब्रह्मका देवा ऋषयश्च तपोधनाः ।
स्वागतेनार्च्य वः सर्वाञ्श्रावये वाक्यमुत्तमम् ॥ ४३
विज्ञातं वो मया कार्यं तच्च लोकहितं महत् ।
प्रवृत्तियुक्तं कर्तव्यं युष्मत्प्राणोपबृंहणम् ॥ ४४
सुतप्तं वस्तपो देवा ममाराधनकाम्यया ।
भोक्ष्यथास्य महासत्त्वास्तपसः फलमुत्तमम् ॥ ४५
एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥ ४६
सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यशः ।
तथा श्रेयो विधास्यामि यथाधीकारमीश्वराः ॥ ४७
श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥ ४८
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।
तस्मिन्सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् ।
देवा देवर्षयश्चैव सर्वे भागानकल्पयन् ॥ ४९
ते कार्तयुगधर्माणो भागाः परमसत्कृताः ।

---

42 a) Da3, a4 G1, 2 दिव्यव( G2 °व्यं व )र्षसहस्रांते. — b) K7 Dn4 तप्ता (for तप्त्वा). K1, 4 सुदुश्चरं; K2 सुदुश्चरन्; K7 B0 Dn1, n4 D8 D2–4, 8, 9 G2 सुदारुणं; D5, 7 T G1, 3, 6 सुदुष्करं (for तदुत्तमम्). — c) D7 T G1–3, 6 वाचं (for वाणीं). — d) D7 -भूषितं.

43 Before 43, K1, 2, 4, 7 D4, 5, 7, 9 T1 G1–3, 6 M1, 5–7 ins. वागुवाच; K6 B0, 6–9 Da3, a4 Dn1, n4 D8 D2, 3, 8 भगवानुवाच. — a) K7 B8, 9 Da4 D8 D5, 7 T G1–3, 6 M5 भो (for भोः). B8 लोका (for देवा). — c) D5 [अ]थ; D7 T G1–3, 6 [अ]च (for [अ]र्च्य). — d) K2 वान्यम्; B8 (marg.) कार्यम् (for वाक्यम्).

44 a) Da3, a4 विज्ञातव्यो; D7 °नं वो (for °तं वो). K1 यो (for वो). K7 Da3, a4 D4, 9 महा- (for मया). — b) D4, 9 तव; G2 तपो (for तच्च). D6 च यत्; G3 च या (for महत्). Da4 तच्च लोकपितामह. — c) B6 (marg. as in text), 7, 9 Da3, a4 प्रभूति-; D82 प्रयुक्ति- (for प्रवृत्ति-). D9 -युद्धं (for -युक्तं). K6 D81 वर्तव्यं; D7 भूतानां; G2 वक्तव्यं (for कर्तव्यं). — d) B8 -बृंहितं (for -बृंहणम्). ❀ C8 : युष्मत्प्राणोपबृंहणम्, युष्मद्बृंहणसाधनमतिमहत्त्वकरमित्यर्थः । ❀

45 a) K7 B8 D4, 5, 9 यत्; B0 Da3 Dn1, n4 D8 D2, 3, 8 च (for वस्). B0 तवो (for तपो). G2 देवो. — b) G2 समाराधन- (for ममा°). — c) K1 भोक्षयासि; K2 भोक्ष्यस्याथ; K7 °थास्व; D6 भोक्षयध्वं; D7 भोक्ष्यथाः स; G2 °तास्य (for °थास्य). — d) K6 तपस्य (for °सः).

46 a) Dn4 ब्रह्म. K7 B6 (marg. as in text) D4, 5, 9 सुर- (for लोक-). — b) K6 B0, 6–9 Dn1, n4 D8 D2, 3, 8 महाँल्लोक-; Da3, a4 महात्मा स (for सर्वलोक-). K7 D9 -नमस्कृतः (for -पितामहः). — c) Da4 विबुधः; D7 T2 °धाः (for °ध-). M7 -श्रेष्ठ. — d) K7 D4, 9 transp. मां and यजध्वं.

47 a) B6 lacuna; Da4 सर्वो. G3 भोगान्; M7 भगवान् (for भागान्). — b) M1, 6, 7 मम यज्ञेषु नित्यशः. — c) K1, 2, 4, 7 B6, 7 Da3, a4 D4, 5, 9 ततः; D7 T G1–3, 6 तत्र (for तथा). K1, 2, 4 B7–9 Dn1, n4 D8 D2, 3, 5, 8 [ऽ]भि- (for वि-). — d) Da4 D82 D7 [अ]धिकारम्. Da4 T2 G2 ईश्वरः.

48 Before 48, K1, 2, 4, 7 B6 (marg.), 7–9 Dn1, n4 D82 D2–5, 8, 9 M1, 5–7 ins. वैशंपायन उवाच; K6 B0, 6 (orig.) Da3, a4 D81 व्यास उ°; T2 सूत उ°. D6 om. 48cd. — d) Da4 तेज-; G1 च स (for ते च). M1, 6, 7 ब्रह्मा ते परमर्षयः.

49 a) K2 M1, 6, 7 देव- (for वेद-). M6 -सृष्टेन (for -दृष्टेन). — b) K7 D9 आहरत्; M1, 5–7 आवहन्. Dn4 वैष्णवं तु क्रतुं महान्. — c) G2 यज्ञे (for सत्रे). K1, 2, 4 स्वयं; Da4 महा-; Dn1, n4 D82 D3, 8 T1 G3 सदा; D2 तथा (for तदा). Da3, a4 देवाः (for ब्रह्मा). — d) K1, 2, 4 हरेर्; K7 D4, 9 विष्णोर्; M1, 7 स्वं (for स्वयं). G1 अकल्पयन्. — B0 M1, 6, 7 om. (hapl.) 49cf. 49e is damaged in B6. — e) K1, 2 महर्षयश् (for देव°). — f) K6 D4, 9 सर्वे भागम्; B6–8 Dn1, n4 D8 D2, 3, 5, 7, 8 स्वयं (Dn1, n4 D8 स्वं स्वं) भागम् (for स्वयं भागान्). K7 Da4 अकल्पयत्.

50 T1 om. 50a–51b. — a) K1, 2 ते कांत-; K7 ते सर्वे; B8 (marg.) एकांत- (for ते कार्त-). K7 D4, 9 -कर्माणो; B0, 7 D2, 3, 5 -धर्माणां (for °णो). ❀ C8 : कार्तयुगधर्माणः, अहिंसादिलक्षणकृतस्वभावाः, मन्त्रलोपतन्त्रलोपक्रियालोपहिंसादिरहिताः, परमसंस्कृताः । ❀ — b) K2, 4

प्रादुरादित्यवर्णं तं पुरुषं तमसः परम् ।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् ॥ ५०
ततोऽथ वरदो देवस्तान्सर्वानमरान्स्थितान् ।
अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः ॥ ५१
येन यः कल्पितो भागः स तथा समुपागतः ।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ॥ ५२
एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम् ।
यूयं यज्ञैरिज्यमानाः समाप्तवरदक्षिणैः ।
युगे युगे भविष्यध्वं प्रवृत्तिफलभोगिनः ॥ ५३
यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ॥ ५४
यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ॥ ५५
यूयं लोकान्धारयध्वं यज्ञभागफलोदिताः ।
सर्वार्थचिन्तका लोके यथाधीकारनिर्मिताः ॥ ५६
याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः ।
ताभिराप्यायितबला लोकान्वै धारयिष्यथ ॥ ५७
यूयं हि भाविता लोके सर्वयज्ञेषु मानवैः ।

C. 12. 13070
B. 12. 341(40). 65
K. 12. 349. 64

---

Dn1 भागः; D5 भागान् (for भागाः). K1.2.4 -काल्पिताः; Dn1 -सत्कृतः; D8 D6.7 T2 G3.6 -संस्कृताः (D8 °तान्); G2 -संस्मृताः (for -सत्कृताः). — c) K7 Bo.6.8.9 Dn1.n4 D8 D2–5.7–9 G3.6 प्राहुर् (for प्रादुर्). K6 B6.7.9 Da3.a4 D5 -वर्णाभं (for -वर्णं तं). — d) K2 तपसः (for तमसः). Dn4 परः. K7 D4.5.9 तमसः पुरुषं परं. — e) Dn4 बृहंतं; G6 बृह्मा तं (for बृहन्तं). G2 बृहंतं सर्वदेवेशम्. — f) B6.7.9 Da4 सर्वदं (Da4 °द-); Da3 सर्वदेवं (hypermetric) (for वरदं).

51 T1 om. 51ab (cf. v. l. 50). — a) K1.2.4 स (for ऽथ). Da3 दैवस्. K7 D4.9 उवाच भगवान्देवस्. — b) T2 transp. तान् and सर्वान्. M5 विबुधान् (for अमरान्). — c) B8 (marg. as in text) [ऽ]थ (for [इ]दं). K7 D4.9 अशरीरो जगादेवं. — d) K1.2.4 राजन्; K6 B6.8 Dn4 D5 स्वस्थो (for खस्थो). K4 महेश्वरं; T2 [ऽ]हमीश्वरः.

52 Before 52, B8 ins. भगवानुवाच. — a) K7 यतयः; M1.5–7 योनेन (for येन यः). K7 कल्पिता. G2 lacuna; M1.6.7 भागं (for भागः). — b) G2 यथा (for तथा). K1.2 समुपा(K2 °प)स्थितः; K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D3.3.5.8 मामुपागतः; M1.5–7 त्वमु° (for समु°). — c) D9 प्राप्तो (for प्रीतो). K1.4 वै दिशामि; K2 वैद्यशामि (sic); D7 प्रविशामि; T2 प्रद° (for प्रदि°).

53 a) B6 (marg.) D5 M1.5–7 एवं (for एतद्). D7 T G1–3.6 वै (for वो). K1 देव; D7 G2 देवात् (for देवा). — b) G2 स (for मत्-). K6 B6–9 -प्रभाव-; K7 D4.9 -प्रसादात् (for -प्रसाद-). B7.9 -समुद्भवः (for °द्भवम्). — c) Dn1.n4 D8 D2.3.8 स्वयं (for यूयं). K7 Bo.6.8 (last two marg.) Dn1 D8 D2–4.8.9 M1.5–7 यजमानाः; B7 विद्य°; Da3 T1 G3.6 ईजमानाः; Da4 ईज्यमानाः; Dn4 यज्यमानाः; D6 इज्यतमाः; G2 इज्यमानः (for °मानाः). — d) G1 समाप्ते (for °प्त-). — f) K2.4.6.7 Bo.6–8 Dn1.n4 D8 D2.3.5.8 G3 -भागिनः (for -भोगिनः).

54 a) Da3 यक्षंति (for यक्ष्यन्ति). — c) D8 वै (for वो). Dn4 D2.4 भागास्. — d) K7 lacuna; B6.7 तांस्तान्वै; Da3.a4 तान्वै (for ते नरा). G2 M1.5–7 देव- (for वेद-). D8 M1.6.7 -कल्पिताः (for °तान्). K6 तांस्तान्वेदप्रकल्पितान्; D5 तांस्तान्वेदेन क°.

55 a) K6 B6.7.9 Da3.a4 वै; T2 यो (for मे). — b) T1 भागस्तस्मिन्महाक्रतौ. — c) K7 D9 फल- (for यज्ञ-). G2 शतधा यज्ञभागो वै. — d) G2 वेदसूत्रो.

56 a) D7 लोकं (for लोकान्). K6 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 भावयध्वं (for धार°). — b) K1.2 -फलार्चिताः; K4.7 Bo.8 (marg. as in text) Dn1.n4 D8 D2.3.8 -फलोचि(K7 °लो हि)ताः; Da4 °दितः; D5 -बलोदिताः (for -फलो°). D7 T G1–3.6 यज्ञभागैश्च (G2 °स्तु) योजि(T1 G3.6 कल्पि)ताः. — K1 om. (hapl.) 56c–57b. — c) Ds1 सर्वार्थे (for °र्थ-). M1.7 -चिंतकं (for -चिन्तका). — d) Da4 Ds2 यथाधिकार-; T G1–3.6 मयाधि°. M1.6.7 -निर्मितान्. Bo यथाधीकारमीश्वराः.

57 K1 om. 57ab (cf. v. l. 56). — b) K6 -गुणकाङ्क्षिताः; K7 D4.5.9 -फ(D5 -ब)लमाश्रिताः; B6.7.9 Da3.a4 -गुणकल्पिताः; D7 -फलसंस्कृताः; M1.6.7 °सत्क्रियाः (for °सत्कृताः). — c) Dn1.n4 D8 D2.3.5.7.8 T1 G3.6 आभिर् (for ताभिर्). — d) B7 धारयिष्यति; Ds1 °यिष्यतः.

C. 12. 13632
B. 12. 349(8). 84
K. 12. 356. 84

एष ते कथितो धर्मः सात्वतो यदुबान्धव ।
कुरुष्वैनं यथान्यायं यदि शक्नोषि भारत ॥ ७८
एवं हि सुमहाभागो नारदो गुरवे मम ।
श्वेतानां यतिनामाह एकान्तगतिमव्ययाम् ॥ ७९
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते ।
स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ॥ ८०
इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये न भजन्ति विमोहिताः ॥ ८१
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
संहारकारकश्चैव कारणं च विशां पते ॥ ८२

इति श्रीमहाभारते शान्तिपर्वणि षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥ ]

---

पांडव ( for यदुबान्धव ). K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds2 D2. 3. 5. 7. 8 सात्वतः कुरुनंदन; K7 D4. 9 °तां यमुवाच ह; V1 °तः पुनरुत्थितः; Ds1 सात्वतः*****. — c) G1 एवं ( for एनं ). K2 यथा न्याय्यं; K7 D4. 9 यथा तुभ्यम् ( for यथान्यायं ). — d) B8 Da3. a4 M1. 5. 6 शक्तोषि; Dn1. n4 D8 D2. 3. 5. 7. 8 G1 शक्तोसि ( for शक्नोषि ). K1. 2. 4 D5. 7 पार्थिव ( for भारत ). K7 D4. 9 आख्यातः पार्थिवोत्तम.

79 Ś1 missing ( cf. v. l. 65 ). — a) Bo Dn1. n4 D8 D2. 3. 8 G1 स ( for सु- ). G1 महाभाग. — b) D5 om. (hapl.) रदो गु. B8 Da3. a4 गुरवो ( for °वे ). K7 नमः ( for मम ). — c) K1. 2. 4 T1 G1. 3. 6 यमिनाम्; K7 D4. 9 व्रति°; B6 **तं; B7. 9 Da3. a4 यततां; Dn1 यतीनां; Ds1 प्राशिषा ( for यतिनाम् ). K6 Bo. 6. 7. 8 ( marg. as in text ). 9 Da3. a4 Dn1. n4 D8 D2. 3. 8 चाह ( for आह ). ❀ Cn: श्वेतानां, गृहस्थादीनाम्, यतिनां, काषायवस्त्रधारिणाम् । ❀ — d) T1 G6 M1. 6. 7 एकांति- ( for एकान्त- ). Ds2 -मतिम् ( for -गतिम् ). Da3 अव्यया; Da4 Dn4 Ds1 D9 अव्ययं.

80 Ś1 missing ( cf. v. l. 65 ). — b) Dn1 धर्मं ( for धर्म- ). — c) T1 G3. 6 तु ( for [अ]यं ). Da4 तेभ्य ( for तुभ्यम् ). — d) G1 आख्यातुं. K1. 2 G1 प्रथितो; K7 D4. 9 प्राशिषा ( K7 °षो ); D5. 7 प्रभृतो; T1 G3. 6 M1. 5–7 प्राशिषा ( for प्रसृतो ). K1. 2. 7 G1 गुरुः; Da4 गुरो.

81 Ś1 missing ( cf. v. l. 65 ). — a) K1. 2. 4. 7 D4. 5. 7. 9 T1 G1. 3. 6 दुष्करो ( for दुश्चरो ). — b) G1 पुण्यः ( for एष ). — c) Ds2 D5. 7 यथा ( for तथा ). K1. 2. 4 [अ]न्ये च; K7 D4. 5. 7. 9 चान्ये ( for [ए]वान्ये ). — d) K6 V1 Bo. 8 Dn1. n4 D8 D2. 3. 8 भवंतीह; B6. 7. 9 भजंतीह; M5 न भवंति ( for न भजन्ति ). K6 च; K7 V1 Da?. a4 D4. 5. 9 M1. 5–7 [इ]ह ( for वि- ). K1. 2. 4 न भजंते तमोहताः ( K2 °तः ).

82 Ś1 missing ( cf. v. l. 65 ). — a) Da3. a4 कृत्स्न ( for कृष्ण ). — b) Da4 भावतो; T1 G3. 6 भावानां ( for भावनो ). K1. 2. 4. 7 D4. 5. 7. 9 मोहनो ( K4 °ने; D4 °ना ) भावनस्तथा. — c) K1. 2. 4 -कारणं ( for -कारकश् ). — d) K7 हि ( for च ).

Colophon. Ś1 D6 T2 G2 missing: K3. 5 B1–5 Da1. a2 Dn2 n3 D1 G4. 5 M2–4 absent. — *Sub-parvan :* K1. 2, 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 T1 G1. 3. 6 M1. 5–7 मोक्षधर्म. — *Adhy. name :* K1. 2. 4. 6 Ds1 D4 G1. 3 नारा( D4 नरनारा )यणीयं; K7 D5. 7. 9 नारा( K7 D9 नरनारा )यणीये विष्णुधर्मावतारः; V1 B8 Da3. a4 Dn1 नारा( Da3. a4 नरनारा )यणीये एकांतिकभावः; Bo. 6 एकांतिभावः; B7 नारायणीयैकांतिकाभावः; B9 M1. 5–7 °णीये एकांतिभावः; Dn4 Ds2 D2. 3 एकांतिक( Ds2 °का )भावः; D8 ऐकांतिकसंभवः. — *Adhy. no.* ( figures, words or both ): K6 74; K7 D9 15 ( sic ); B7 272; B8 274; Dn1 G1 174; Dn4 172; Ds2 G3 176; D8 170; T1 G6 175; M1. 6. 7 171; M5 206. — *Śloka no.:* Da3 Dn4 88; Da4 89; D8 90.

# [ ३३७ ]

जनमेजय उवाच ।
सांख्यं योगं पञ्चरात्रं वेदारण्यकमेव च ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ १
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ।
प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥ २
वैशंपायन उवाच ।
जज्ञे बहुज्ञं परमत्युदारं
यं द्वीपमध्ये सुतमात्मवन्तम् ।
पराशराद्गन्धवती महर्षिं
तस्मै नमोऽज्ञानतमोनुदाय ॥ ३
पितामहाद्यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशजमेकपुत्रं
द्वैपायनं वेदमहानिधानम् ॥ ४
तमादिकालेषु महाविभूति-
र्नारायणो ब्रह्ममहानिधानम् ।

C. 12. 13641
B. 12. 350(49).5
K. 12. 359. 5

## 337

☞ This adhy. is missing in Ś1 D6 T2 G2 ( cf. v. l. 12. 336. 65 ; 283. 15 ; 336. 1 ; 335. 40 ).

1 G1 repeats $1^{ab}$ ( with the ref. ) after 1. K4 जनक; G1 ( first time ) वैशंपायन ( for जनमेजय ). — a ) K2.7 B0.7–9 Ds2 D3.5 G3 M1.7 सांख्य- ( for सांख्यं ). K1.2.4.7 B6 D2.4.8.9 T1 G1 ( second time ).3.6 M5 Kumbh. ed. योगः ( for योगं ). K7 D4.9 पंचरात्रो ; B7 Ds2 D3.8 G3 Kumbh. ed. पांचरात्रं ( for पञ्च° ). — b ) K1.2.4 V1 D5.7 T1 G1 ( both times ).3.6 वेदाः पा( K4 प )शुपतं तथा. — c ) Ds1 ब्रह्मर्षेर्; D4.5.7.9 विप्रर्षे ( for ब्रह्मर्षे ). G1 आत्मप्रमाणान्येतानि. — d ) K1.2.4.7 B8 D3–5.7–9 G3.6 हि; V1 [उ]त; B7 ते; M5 च ( for ह ). G1 न हंतव्यानि हेतुभिः.

2 b ) V1 बहु- ( for पृथङ्- ). — After $2^{ab}$, V1 D7 T1 G3.6 Kumbh. ed. repeat 12. 336. 74. D7 T1 G3.6 read $2^{cd}$ twice. — c ) V1 D7 T1 G3.6 ( last four second time ) वदस्व त्वं; D5.7 ( first time ) ब्रह्मैवैनं; G1 वद सर्वं ( for प्रब्रूहि वै ). K7 मे ( for वै ). G3.6 ( both second time ) यथा ( for मया ). Da4 पृष्टं; D7 ( first time ) दृष्टः ( for पृष्टः ). K1.2.4 एतन्मे सर्वमाचक्ष्व. — d ) T1 G3.6 ( all first time ) प्रवक्तृंश्च; G1 प्रवृत्तं ( for °त्तिं ). K1.2.4 यथातथेन ( K4 °थ्येन ) वै द्विज. — After 2, K1.2.4 read 12. 336. $66^{c}$–$74^{b}$ followed by 899*.

3 a ) K1.4 Da4 Dn4 यज्ञे ( for जज्ञे ). K7 D9 परमं पुराणं; Da3.a4 °मभ्युदारं; Dn4 °मत्प्रदारं ( sic ); D4 पुरुषं पुराणं; D5.7 परमं ह्युदारं; T1 G1.3.6 M1.5–7 परमा( M1 °म )भ्युदारं ( for °मत्युदारं ). — b ) K1 lacuna; Dn4 D5.7 यो ( for यं ). K1.2.4 D5.7 आत्मभाजं; K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 C8 °योगात् ( for °वन्तम् ). ❀ C8 : द्वीपमध्ये, यमुनाद्वीपमध्ये । ❀ — c ) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 T1 G3.6 Kumbh. ed. सत्यवती ( for गन्ध° ). D5.7 महर्षेस्.

4 a ) K1.2.4.7 D4.9 पंचमं ( for षष्ठं ). ❀ Ca : पितामहो ब्रह्मा आद्यो यस्य वाचिकपुत्रस्य तम् । तथा न संगच्छते । केचित्पितामहशब्देन नारायण उच्यते इत्याहुः ॥ Cn : पितामहस्य आद्यो नारायणस्तं, यं षष्ठं नारायणावतारं वदन्ति । पितामहाद्यमारभ्य यं षष्ठं वदन्तीति वा, यस्मात्पितामहाद्यं षष्ठं वदन्तीति वाध्याहृत्य योज्यम् । सर्वथापि पितामहाद्यमित्येकं पदम् ॥ Cp : पितामहात्, नारायणात् । कृष्णद्वैपायनं षष्ठम् । तथा हि, प्रथमं नारायणस्ततो ब्रह्मा ततो वसिष्ठस्ततः शक्तिस्ततः पराशरस्ततो द्वैपायन इति ॥ C8 : भगवतो व्यासस्य ब्रह्मर्षिवंशप्रभवत्वमेव सर्वे जानन्ति, न तु भगवद्भवत्वमित्याह । पितामहाद्यं, यं पुत्रं पितामहादारभ्य नारायणस्य षष्ठं–नारायणो–ब्रह्मा–वसिष्ठः–शक्तिः–पराशरो–व्यास इति नारायणषष्ठम् । ❀ — b ) V1 Da3.a4 अक्षरय- ( for आर्षेय- ). ❀ C8 : आर्षेयविभूतिभिः शमदमादिभिः । ❀ — c ) K1.2.4 [अं]शमजैक-; T1 G3.6 °कमेक-; Cv ( gloss : अवा[पा]न्तरतमाख्यप्रथमावतारे वागुच्चारणसमये नारायणस्यास्याजातम् ) [अं]गजमेक- ( for [अं]शजमेक- ). D7 -मंत्रं ( for -पुत्रं ). — d ) B6 ( marg. ) -निदानं.

5 D5.7 om. ( hapl. ) $5^{ab}$. — a ) K1.2.4 B9 D4.9 T1 G1.3.6 -काले सु-; Ds1 -कालेपि; M1.5–7 -काले स ( for -कालेषु ). K1.2.4.7 B8 Da3 D4.9 T1 G1.3.6

C. 12. 13541
B. 12. 350(49).5
K. 12. 359. 6

ससर्ज पुत्रार्थमुदारतेजा
व्यासं महात्मानमजः पुराणः ॥ ५

जनमेजय उवाच ।

त्वयैव कथितः पूर्वं संभवो द्विजसत्तम ।
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ॥ ६
पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ॥ ७
किमतः पूर्वजं जन्म व्यासस्यामिततेजसः ।
कथयस्वोत्तममते जन्म नारायणोद्भवम् ॥ ८

वैशंपायन उवाच ।

वेदार्थान्वेत्तुकामस्य धर्मिष्ठस्य तपोनिधेः ।
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ॥ ९
कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः ।
शुश्रूषां तत्परा राजन्कृतवन्तो वयं तदा ॥ १०
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ॥ ११
एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः ।
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ १२
वेदानावर्तयन्साङ्गान्भारतार्थांश्च सर्वशः ।
तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ १३
कथान्तरेऽथ कस्मिंश्चित्पृष्टोऽस्माभिर्द्विजोत्तमः ।
वेदार्थान्भारतार्थांश्च जन्म नारायणात्तथा ॥ १४

---

-विभूतिं; B9 -विभूतं (for °तिर्). — $^{b}$) D8 वेद- (for ब्रह्म-). B6-9 Da3.a4 -नि( Da4 -वि )धानमाद्यं ( B6.7.9 °द्यः ); M1.7 -महानिधानः (for °निधानम्). ❀ Cs: ब्रह्मणो वेदस्य महानिधानमाधारः । ❀ — $^{d}$) K1.2.4 ध्यायन्; Dn4 वयासं (for व्यासं). K1.2.4.6 B0 Dn1.n4 D5 D2.8.8 M6 Kumbh. ed. अजं पुराणं; B8 अजः पुराणं.

6 $^{a}$) Dn4 स्वयैव (for त्वयैव). K6.7 B8.9 G1 M1.5.7 कथितं (for °तः). M1 पूर्वं- (for पूर्वं). — $^{b}$) K1.2.4.7 V1 B8.9 Ds1 D2.8 (before corr. as in text).4.8.9 T1 G3.6 संभवे (for °वो). Da4 द्विजसत्तमः. — $^{c}$) K6.7 V1 D4 वशिष्ठस्य. K1.2 [आ]त्मजः (for सुतः). D5 om. शक्तिः. — $^{d}$) Dn1 Kumbh. ed. शक्तिपुत्रः (for शक्तेः पुत्रः). K1 पुरःशरः (sic); K7 परासरः; Dn4 °शरं; D4 lacuna (for पराशरः).

7 $^{a}$) D4 परासरस्य. — $^{c}$) Da4 -मुखं (for -सुतं). — $^{d}$) G1 [ए]कं (for [ए]नं).

8 $^{a}$) G3 किमेतत् (for किमतः). T1 G1.2.6 M1.5-7 Kumbh. ed. पूर्वकं (for °जं). K1 om. जन्म. — $^{c}$) K6 कथं यस्य; Da4 कथमस्य (for कथयस्व). T1 G3.6 [इ]ह मम वै; G1 महाबुद्धे (for [उ]त्तममते). — $^{d}$) M6 जन्म नारायणात्मकं.

9 $^{a}$) K1.2 भेत्तुकामस्य; B8 वेष्टु°; Dn4 वक्तु°; G1 श्रोतु° (for वेत्तु°). Da3.a4 वेदानन्वेष्टुकामस्य; D5.7 T1 G3.6 M5 Kumbh. ed. वेदार्थवेत्तुर्व्यासस्य; Csp (gloss: वेदार्थाभिज्ञस्येति पाठान्तरीयोऽर्थः) वेदार्थान्वेत्तुकामस्य (as in text). — $^{c}$) K7 D4.5.9 -तृप्तस्य (for -निष्ठस्य). — $^{d}$) D5 -पादम् (for -पाद).

10 $^{a}$) Da3 आख्यान-; Dn4 °तं (for °नं). K6 कृत्वा भागवताख्यानं. — $^{b}$) G1 M1.5.7 तप- (for तपः-). K1 B8 (marg. as in text) -शांतस्य (for -श्रान्तस्य). — $^{c}$) Da4 शुश्रूषा-. K6 Da3 G1 तत्परां; K7 D4.9 परमां.

11 = (var.) 12. 327. 16. — $^{a}$) K2 Da4 सुमंतु-. K4 जैमनिश्; K6 Da4 Dn4 जैमुनिश् (for जैमिनिश्). — $^{b}$) K1 पैलाश्; M5 वैन्यश्. K1.2.4 चैव; Da3 च * (for च सु-). Da4 पैलवश्च दृढव्रतः. — $^{c}$) Dn4 शिष्ये (for शिष्यो). K4 मे (for वै). — $^{d}$) B0 तदा (for तथा). K1.2.4.7 D4.5.9 G1 पंचमस्तु शुकः स्मृतः.

12 $^{a}$) K1.2.4 D7 T1 G3.6 एतैः (for एभिः). — $^{b}$) K2 उत्तमः. — $^{c}$) K1.2.4 D5 -पार्श्वे (for -पादे). — $^{d}$) D5 देवैर् (for भूतैर्).

13 13 is damaged in G1. 13$^{cd}$ is damaged in B6. — $^{c}$) K2.4 दातुं (for दान्तं). — $^{d}$) K6.7 D4.9 व्यासम् (for वयम्). Da4 सुक्ता वयमुपासते (sic).

14 14$^{ab}$ is damaged in B6 G1. — $^{a}$) K1.2.4 D5 कथांतरे तु; V1 Dn4 Ds1 D4.7.9 T1 G3.6 M1.5-7 °तरे च; B7 °तरेण (for °तरेऽथ). — $^{b}$) K1 Da4 द्विजोत्तम; Dn4 °त्तमं. — $^{c}$) K2 Da3 भा( K2 भ )रतार्थश्च. — $^{d}$) D4 om. (hapl.) from नारायणा up to जन्म (in 15$^{a}$).

स पूर्वमुक्त्वा वेदार्थान्भारतार्थांश्च तत्त्ववित् ।
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे ॥ १५
शृणुध्वमाख्यानवरमेतदार्षेयमुत्तमम् ।
आदिकालोद्भवं विप्रास्तपसाधिगतं मया ॥ १६
प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसंभवे ।
नारायणो महायोगी शुभाशुभविवर्जितः ॥ १७
ससृजे नाभितः पुत्रं ब्रह्माणममितप्रभम् ।
ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् ॥ १८
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ।
सृज प्रजास्त्वं विविधा ब्रह्मन्सजडपण्डिताः ॥ १९
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः ।
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ॥ २०
का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते ।
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ॥ २१
स एवमुक्तो भगवान्भूत्वाथान्तर्हितस्ततः ।
चिन्तयामास देवेशो बुद्धिं बुद्धिमतां वरः ॥ २२
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ।
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ॥ २३
स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम् ।
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः ॥ २४
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ।
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा ॥ २५

C. 12. 13661
B. 12. 350[49].25
K. 12. 359. 25

---

15 $D_4$ om. $15^{abc}$ (cf. v. l. 14). — a) $K_1$ सु- (for स). $B_{7.8}$ $D_{a3.a4}$ पूर्वमुक्त्वाथ वेदार्थान्. — b) $K_2$ भरतार्थांश्च. $K_{1.4}$ सर्ववित् (for तत्त्व°). — d) $K_{1.2}$ व्याहंतुम् (for व्याहर्तुम्).

16 Before 16, $K_{1.2.4}$ $D_{n1}$ Kumbh. ed. ins. व्यास उवाच. — b) $K_6$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2.3.5.8}$ $M_5$ Kumbh. ed. इदम् (for एतद्). $M_{1.6.7}$ आर्षेयं पुरातनं (submetric). — c) $G_1$ damaged. $K_{1.2}$ -कालोद्गतं; $D_{s2}$ $D_8$ -कालोद्भवे (for °द्भवं). — d) $K_7$ $D_{4.9}$ साधितं; $M_{1.6.7}$ विगतं (for [अ]धि°). $G_3$ तापसाधिगतं.

17 a) $D_5$ च (for वै). — b) $D_{n4}$ यज्ञ- (for पद्म-). $M_{1.7}$ सत्त्वमेवमसंभवे (sic).

18 a) $K_{1.7}$ समृजे; $G_1$ सहसृजे (hypermetric) (for ससृजे). $D_7$ $T_1$ $G_{3.6}$ $M_{1.6.7}$ नाभिजं (for °तः). $K_6$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2.3.5.8}$ Kumbh. ed. पूर्वं (for पुत्रं). — b) $D_{n1}$ Kumbh. ed. -प्रभः (for -प्रभम्). $G_1$ ब्रह्माणममितौजसं. — c) $K_{1.2}$ $D_5$ $G_1$ तस्याग्रे (for ततः स). — d) $D_{n4}$ अथैतं; $G_1$ तथैनं.

19 a) $K_2$ $T_1$ नाभिजो; $G_1$ lacuna (for °तो). — b) $D_{a4}$ प्रजाः (for प्रजा-). — c) $D_{n4}$ सृत; $M_7$ सृजन् (for सृज). — d) $G_{3.6}$ $M_{1.5-7}$ सजळ- (for सजड-). $D_{5.7}$ ब्रह्मव्रज ($D_5$ °व्रज) उपस्थितः.

20 $D_7$ om. (hapl. ?) $20^{c}$–$22^{a}$. — a) $V_1$ $D_5$ विमनाश्च; $D_{n4}$ विप्रर्षिश्च (for विमुखश्च). — b) $K_4$ -मानसे (for °सः). — c) $K_6$ वरदो (for °दं). $D_{a4}$ प्रणम्य देवदेवस्य.

21 $D_7$ om. 21 (cf. v. l. 20). — b) $K_7$ प्रजा सृष्टुं; $D_{n4}$ प्रजाः सृष्टे. $D_{n4}$ तं (for ते). — c) $D_{n4}$ $D_{s1}$ अप्रजावान्; $G_1$ अप्रज्ञानाद् (for °वान्). $D_{n4}$ देवं. $K_2$ $M_7$ अप्रजा(°ज्ञा)वाहनं देव. — d) $D_{a3}$ $M_7$ विधस्व (for °त्स्व).

22 $D_7$ om. $22^{a}$ (cf. v. l. 20). — b) $K_{1.2.4}$ $G_1$ $M_{1.6.7}$ च (for [अ]थ). $D_5$ [अं]तर्हिते. $K_{1.2.4}$ $T_1$ $G_{3.6}$ तदा (for ततः). — c) $G_3$ $M_{1.5-7}$ विश्वेशो (for देवेशो). — d) $K_{1.2.7}$ $V_1$ $D_{n4}$ $D_{s1}$ $D_7$ $T_1$ वर (for वरः).

23 a) $D_{5.7}$ स्वरूपि($D_7$ °पा)णीं; $T_1$ $G_{1.3}$ स्वरूपाणी (for °पिणी). — c) $K_2$ चैनं; $K_6$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n4}$ चैव; $K_7$ $D_{4.9}$ तां स (for चैनां). $B_{6-9}$ $D_{a3}$ निर्योगे; $D_{a4}$ °गं; $T_1$ $G_{3.6}$ $M_{5-7}$ संयोज्य; $M_1$ संपूज्यं (for निर्योगः). ❀ $C_s$: दुर्घटानपि पदार्थान्योजयति, घटयतीति योगः शक्तिविशेषः, तेन निर्योगः, स्वयं योगरहितोऽभवदित्यर्थः । ❀ — d) $K_{1.2.4}$ $D_{s1}$ स्वयं च; $K_7$ $V_1$ $D_{4.5.7.9}$ $T_1$ $G_1$ $M_{1.5-7}$ स्वयं सं- ($K_7$ स्व-; $G_1$ $M_1$ स); $G_{3.6}$ स स्वयं (for स्वयं नि-). $K_{1.2.4.7}$ $D_{4.5.9}$ $G_1$ ततः (for तदा).

24 a) $D_4$ -योगस्था. — b) $K_{1.4}$ शक्तिमती; $K_6$ $V_1$ $B_{0.6-9}$ $D_{a3.a4}$ $D_{n1.n4}$ $D_8$ $D_{2.3.8}$ Kumbh. ed. गतिमतीं (for शक्ति°). $D_{4.9}$ सतां; $T_1$ $G_{3.6}$ गतिं (for सतीम्). — d) $K_{2.4}$ तदा (for बुद्धिं). $K_7$ $D_{4.9}$ च; $D_{n4}$ चैव (hypermetric) (for वै). $B_8$ ईश्वरः (for अव्ययः).

25 a) $K_7$ $D_{4.9}$ ब्रह्माणं प्रविशस्वेति. — b) $K_7$

C. 12. 13662
B. 12. 350(49). 26
K. 12. 359. 26

अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः ।
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः ॥ २६
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
प्राप चैव मुहूर्तेन स्वस्थानं देवसंज्ञितम् ॥ २७
तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ।
अथास्य बुद्धिरभवत्पुनरन्या तदा किल ॥ २८
सृष्टा इमाः प्रजाः सर्वा ब्रह्मणा परमेष्ठिना ।
दैत्यदानवगन्धर्वरक्षोगणसमाकुलाः ।
जाता हीयं वसुमती भाराक्रान्ता तपस्विनी ॥ २९
बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः ।
भविष्यन्ति तपोयुक्ता वरान्प्राप्स्यन्ति चोत्तमान् ॥ ३०
अवश्यमेव तैः सर्वैर्वरदानेन दर्पितैः ।
बाधितव्याः सुरगणा ऋषयश्च तपोधनाः ।
तत्र न्याय्यमिदं कर्तुं भारावतरणं मया ॥ ३१
अथ नानासमुद्भूतैर्वसुधायां यथाक्रमम् ।
निग्रहेण च पापानां साधूनां प्रग्रहेण च ॥ ३२
इमां तपस्विनीं सत्यां धारयिष्यामि मेदिनीम् ।
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना ॥ ३३

---

-सिद्ध्यर्थं- (for -सृष्ट्यर्थं-). — c) M1. 6. 7 ईश्वरोद्दिष्टा (for °रादिष्टा). — d) M7 बुद्धिं (for बुद्धिः). D7 T1 G3. 6 ह (for सा).

26 a) K6 B6. 7. 8 (marg. as in text) Da4 तथैनं; Da3 तथैतं (for अथैनं). M1. 6. 7 -संपन्नं (for -संयुक्तं). — b) D7 T1 G3. 6 तं; G1 M7 सं- (for स). — c) B8 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. चैत्र; D5 चेह (for चैनं). K1. 2. 4 G1 हरिः (for वचः). — d) K7 भजेह; Da4 सृजेम; D4. 9 सृजेह (for सृजेमा). K2 D4 विविधा (for °धाः). —After 26, K1. 2. 4. 6. 7 V1 (marg.) B0. 6–9 Da3. a4 Dn1. n4 D8 D2–5. 7–9 T1 G1. 3. 6 C8 Kumbh. ed. ins.:

902* बाढमित्येव कृत्वा स यथाज्ञां शिरसा हरेः ।

[ K6 B0. 8 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. [अ]सौ (for स). Da3. a4 D5. 7 यथाज्ञा. K6 B6 (marg. as above). 7–9 Da3. a4 D5 दधे; V1 तदा (for हरेः).]

— D7 T1 G3. 6 cont.:

903* तथाकरोच्च धर्मात्मा ब्रह्मा लोकपितामहः ।

27 a) K7 D4. 9 M1. 5–7 स एवमुक्त्वा भगवांस्. — c) T1 G3. 6 प्रायाच्; G1 प्राहश्च (for प्राप). K1. 2. 4 चैष; K6 B0. 7. 8 Dn1. n4 D8 D2. 3. 5. 8 M5 Kumbh. ed. चैनं (for चैव). — d) K1. 2 D5 Kumbh. ed. स्वं स्थानं; K6. 7 B6. 9 Da3. a4 D2. 3 संस्थानं (for स्व°). K1. 2 D5 G1 वेद- (for देव-). K7 -संस्थितं; D5 G1 -संज्ञकं (for -संज्ञितम्).

28 a) K1. 2 D5 प्राप्त (for प्राप्य). K6 B6–9 Da3. a4 तां वै भागवतीं (Da3 °ती; Da4 °तिं) प्राप्य. ❀ C8: प्रकृतिं, षड्गुणोत्पादकशरीरम् । ❀ — b) K6 एको; B6–8 मतिं (for एकी-). Dn4 -भागवतो (for -भावगतो). K2. 4 एकीभागवते भवे(K4 °व)त्; B9 Da3. a4 मतिं (Da3 °ति-) भागवतोभवत् (Da4 °तो महान्); D5 एकभागवतोभवत्. — d) D7 तथा (for तदा).

29 a) K6 B0. 6–9 Da3. a4 Dn1. n4 D2. 3. 8 transp. इमाः and प्रजाः. — c) Da4 -गंधर्वै; Dn4 D81 -गंधर्वा (for °र्व-). — d) K1. 2. 7 D4. 9 G1 -यक्षरक्षः- (K2 °क्ष-); K4 -यक्षराक्ष- (for -रक्षोगण-). K4. 6 V1 B0. 8 Dn4 D2–5. 8. 9 M6 Kumbh. ed. -समाकुला (for °कुलाः). — e) K7 याता (for जाता). D5. 7 T1 G3. 6 चेयं; G1 ह्येवं (for हीयं). Da4 वसुमतीं. — f) Dn4 भयाक्रांता (for भारा°). B7 तपास्विनां; Da4 °स्विनीं; M1. 7 °स्विना (for °स्विनी).

30 a) K2 पृष्ठ्यां; K7 D4. 9 श्रेष्ठा (for पृथ्व्यां). — b) Dn4 -रक्षसां (for -राक्षसाः). — d) Da3 प्राप्स्यसि (for प्राप्स्यन्ति).

31 a) K1. 2. 4 V1 अवश्य(K4 °श्य)मेतैः सर्वैर्हि. — b) B7 damaged. K1 दर्पिताः; K6. 7 D5 तर्पितैः (for द°). — c) K6. 7 Da4 D9 बाधितव्या; Dn4 M7 व्या(M7 वा)धितव्याः (for बाधि°). K1 स्वरगणा (for सुर°). — d) K1. 2. 4 D5. 7 मुनयश्च (for ऋषयश्च). — e) Da4 D5 T1 G3. 6 M6. 7 तत्र न्यायम्; D7 तत्रान्यायम् (for तत्र न्याय्यम्).

32 b) D7 T1 G3. 6 वसुधाया (for °यां). D81 यथाक्रमैः (for °क्रमम्). — c) K2 निग्रहेन. T1 G3. 6 [ए]व (for च). K1. 2. 7 V1 D4. 9 G1 ह्यसाधूनां; K4 च साधूनां (for च पापानां). — d) K2 om. साधूनां. K1 प्रगृहेण; K2 प्रग्रहेन; Da4 च ग्रहेण (for प्रग्र°). V1 प्रग्रहेण च धर्मिणां.

33 a) V1 इयं; D7 इदं (for इमां). K7 D4. 9 देवीं (for सत्यां). K6 B0. 6–9 Da3. a4 Dn1. n4 D8

मया धृता धारयति जगद्धि सचराचरम् ।
तस्मात्पृथ्व्याः परित्राणं करिष्ये संभवं गतः ॥ ३४
एवं स चिन्तयित्वा तु भगवान्मधुसूदनः ।
रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः ॥ ३५
वाराहं नारसिंहं च वामनं मानुषं तथा ।
एभिर्मया निहन्तव्या दुर्विनीताः सुरारयः ॥ ३६
अथ भूयो जगत्स्रष्टा भोःशब्देनानुनादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥ ३७
अपान्तरतमा नाम सुतो वाक्संभवो विभोः ।
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥ ३८
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ।
वेदाख्याने श्रुतिः कार्या त्वया मतिमतां वर ।
तस्मात्कुरु यथाज्ञप्तं मयैतद्वचनं मुने ॥ ३९
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे ।
ततस्तुतोष भगवान्हरिस्तेनास्य कर्मणा ।
तपसा च सुतप्तेन यमेन नियमेन च ॥ ४०
श्रीभगवानुवाच ।
मन्वन्तरेषु पुत्र त्वमेवं लोकप्रवर्तकः ।

C. 12.13679
B. 12. 350[49].43
K. 12. 359. 43

---

$D_{2.3.8}$ $M_{1.6.7}$ Kumbh. ed. इयं तपस्विनी सत्या; $D_5$ इदं तपस्विनी सत्या; $T_1$ $G_{3.6}$ इयं तपस्विनी सर्वां ( $T_1$ धारां ); $M_5$ इयं सरस्वती सत्या. ❀ $C_s$: तपस्विनीं, संतापवतीम् । ❀ — $^b$) $K_4$ $T_1$ $M_{1.6.7}$ धारयिष्यति ( for °यिष्यामि ). $K_6$ $B_{0.6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_8$ $D_{2.3.8}$ $M_5$ Kumbh. ed. धारयिष्यति मेदिनी. — $G_1$ om. $33^{cd}$. — $^c$) $D_{a4}$ ह्येषादि ( for ह्येषा हि ). $K_{1.2}$ वि°; $M_{1.6-7}$ [अ]पि ( for हि ). $K_2$ -ध्रियते ( for ध्रियते ). — $^d$) $T_1$ $G_{3.6}$ पाताळस्थेन. ❀ $C_s$: पातालस्थेन भोगिना, अनन्तरूपेण । ❀

34 $^a$) $K_2$ भारयति; $K_6$ धारयंति; $G_1$ °यती ( for °यति ). — $^b$) $K_6$ $V_1$ $B_{0.6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_8$ $D_{2.3.5.8}$ Kumbh. ed. विश्वं ( for हि स- ). — $^c$) $K_7$ $D_{4.9}$ तस्याः ( for तस्मात् ). — $^d$) $M_5$ करिष्येहमिहाश्रितः. — After 34, $D_7$ $T_1$ $G_{1.3.6}$ read $36^{cd}$.

35 $^a$) $D_{a3}$ एव ( for एवं ). $K_{1.2}$ $D_{n4}$ $D_9$ सं- ( for स ). $K_6$ एवं स चिंतयानस्तु. — $^c$) $D_{n4}$ रूपाण्यनेकानसृजत्. — $^d$) $K_6$ $D_{n1}$ $D_8$ $D_{2.3.8}$ प्रादुर्भावे; $M_5$ °र्भावो ( for °र्भाव- ). $D_{4.9}$ वै ( for सः ).

36 $^a$) $K_{1.2}$ $D_{4.9}$ $G_3$ वराहं. — $D_7$ $T_1$ $G_{1.3.6}$ read $36^{cd}$ after 34. — $^c$) $B_6$ एतैर् ( for एभिर् ). $K_{1.2.4}$ $D_5$ नियंतव्या; $D_{s1}$ [अ]भिहं° ( for निहन्तव्या ). — $^d$) $K_7$ $D_{s1}$ सुरादयः; $D_5$ तदारयः; $G_3$ सुरासुराः ( for °रयः ).

37 $^a$) $K_{1.7}$ $B_9$ $D_{a4}$ $D_{s2}$ $D_{3.5.7}$ जगत्स्रष्टा; $T_1$ $G_{3.6}$ °त्स्रष्टुं ( for °त्स्रष्टा ). — $^b$) $K_2$ $T_1$ $G_{3.6}$ भो- ( for भोः- ). $K_6$ [अ]नुवादयन्; $D_{a4}$ °नानयन्; $D_5$ विनादयन् ( for [अ]नु° ). ❀ $C_s$: भोःशब्देन सरस्वतीमाजुहावेत्यर्थः । ❀ — $^d$) $D_{a4}$ तीव्र- ( for तत्र ). $D_{n4}$ भवेत् ( for ऽभवत् ).

38 $^a$) $K_{1.2.4}$ $D_{4.9}$ अपांतरतमो ( $K_2$ °पो ) नाम; $D_{n4}$ अर्याजरतमा नाम ( sic ); $T_1$ $G_{3.6}$ अवांतरतमा नाम. ❀ $C_a$: अपान्तरतमा इति जन्मान्तरे व्यासनाम ॥ $C_s$: अपगतमान्तरं तमो यस्मात् ॥ $C_v$: अवा[पा]न्तरतम इत्यपि भगवत एव एकं रूपं, आदिनारायणाज्जातम् । परमात्मा ॥ ❀ — $^b$) $K_6$ स्वतो; $K_7$ $D_{4.9}$ स्मृतो ( for सुतो ). $K_{4.7}$ $D_{5.7}$ विभो; $K_6$ $B_{0.6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_8$ $D_{2.3.8}$ प्रभुः; $V_1$ प्रभोः ( for विभोः ). — $K_{1.2.7}$ $D_{4.9}$ $G_1$ om. $38^{cd}$. — $^d$) $K_6$ $B_{6-8}$ $D_{a3}$ जितेंद्रियः ( for दृढव्रतः ). $D_{a4}$ सत्यवादिजितेंद्रियः.

39 $^a$) $K_7$ $D_{4.9}$ $T_1$ $G_{3.6}$ [आ]नतं ( for नतं ). $V_1$ उवाच वचनं पूर्वं. — $^b$) $V_1$ देवानां हरिरव्ययः. — Before $39^{cd}$, $B_6$ ins. श्रीभगवानुवाच. — $^c$) $K_7$ वेदाख्यानः; $D_{a3,a4}$ °ख्या मे; $D_{n4}$ °ख्याते; $D_{s1}$ $D_{4.9}$ $M_5$ $C_s$ °ख्यान-; $M_6$ °ख्यानं ( for °ख्याने ). $K_7$ स्मृतिः ( for श्रुतिः ). ❀ $C_s$: वेदाख्यानश्रुतिः, वेदाध्ययननिमित्ते श्रुतिः, शाखा, कार्या प्राणिनामध्ययनसौकर्यार्थम् । संकीर्णानां ऋग्यजुःसाम्नां व्यासं कुर्वित्यर्थः । ❀ — $^d$) $K_7$ $D_{a4}$ वरः. — $^f$) $K_{1.2.4.6}$ $V_1$ $B_{0.6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_8$ $D_{2.3.5.8}$ $T_1$ $G_6$ Kumbh. ed. मम ( for मया ). $K_{1.2.4}$ $G_1$ सुत; $D_5$ यथा ( for मुने ).

40 $^a$) $K_7$ $D_{4.5.9}$ स्वयं; $D_{n1}$ तथा; $M_{1.6.7}$ ततो ( for तदा ). $K_{1.2.4}$ तेन वेदाः स्वयं भिन्ना. — $^b$) $D_7$ $T_1$ $G_{3.6}$ मनु- ( for मनोः ). $K_{1.2.4.6}$ $D_5$ स्वायंभुवोंतरे; $D_7$ $T_1$ $G_{3.6}$ °भुवांतरे ( for °भुवेऽन्तरे ). — $^d$) $K_1$ तेनास्मि; $K_2$ तेनासि ( for °स्य ). — $D_7$ $T_1$ $G_{3.6}$ om. $40^{ef}$. — $^f$) $D_5$ दमेन ( for यमेन ). $V_1$ नियमेन दमेन च.

41 Most MSS. om. the ref. — $^a$) $K_2$ [अ]पुत्र ( for पुत्र ). — $^b$) $K_{1.2}$ एक-; $V_1$ $D_{n1}$ एकम् ( for

C. 12. 13660
B. 12. 350(49).44
K. 12. 359. 43

भविष्यसचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥ ४१
पुनस्तिष्ये च संप्राप्ते कुरवो नाम भारताः ।
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ॥ ४२
तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति ।
परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥ ४३
तत्राप्यनेकधा वेदान्भेत्स्यसे तपसान्वितः ।
कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि ॥ ४४
धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा ।
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ॥ ४५
वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ४६

यं मानसं वै प्रवदन्ति पुत्रं
पितामहस्योत्तमबुद्धियुक्तम् ।
वसिष्ठमग्र्यं तपसो निधानं
यश्चापि सूर्यं व्यतिरिच्य भाति ॥ ४७
तस्यान्वये चापि ततो महर्षिः
पराशरो नाम महाप्रभावः ।
पिता स ते वेदनिधिर्वरिष्ठो

---

एवं ). K1. 2. 4 V1 B6. 8. 9 Da4 Dn1 D2. 5. 8 M5 एव; K6 Bo. 7 Dn4 D8 G1 एवं; Da3 lacuna; D8 लोके (for लोक-). ❀ Cs: लोकप्रवर्तकः, लोक्यतेऽनेन धर्म इति लोको वेदस्तस्य प्रवर्तकः । ❀ — c) K4 भविष्य संबलो ब्रह्मन् (sic); K6 °ष्य च नो ब्र° (sic). — d) K2 अप्रविष्यश्च (for °धृष्यश्च). K1. 2. 4 D4. 5. 9 सर्वशः (for नित्यशः).

42 a) G1 ततस् (for पुनस्). K1 G1 तिष्येथ; K2 तिष्ठेय; K4 तिष्योथ; Ca. s (gloss [both]: कलौ) तिष्ये च (as in text). — b) V1 D7 T1 G1. 3. 6 M1. 5–7 नामतः; Da3 भारतः; D6. 8 °त (for °ताः). — c) M5. 7 महाबाहो (for °त्मानो). — d) D7 इव (for भुवि).

43 a) D7 एषां (for तेषां). — b) K1. 2. 4 Dn4 D4. 9 M5. 6 कुले (for कुल-). Dn4 भेदा (for -भेदो). — c) M1. 6. 7 परस्परं (for °स्पर-). — d) B6 damaged. G1 Cs (Csp as in text) त्वदृते (for त्वामृते). ❀ Cs: त्वामृते, त्वद्वाक्यमनादृत्येत्यर्थः । ❀

44 a) G1 अनेकथा (for °धा). K4 D7 भेदान्; D5 विद्वान् (for वेदान्). — b) K7 D4. 9 नेष्यसे; Da4 मेप्स्यते; Ds1 भरस्यते; Ds2 मेत्स्यते; D5. 7 तेभ्यः स (for भेत्स्यसे). K1 तपसान्विताः. — c) K2 कृष्ण-; G1 कृते; M5 कार्ष्णे (for कृष्णे). — d) K7 Da3. a4 Dn4 D4 भविष्यति (for °सि).

45 V1 reads 45ab on marg. — a) K2 धर्मानां. Da4 तु (for च). D5 भविष्यर्माणां विविधां (sic). — b) Dn4 कर्त्रा (for कर्ता). D4 ज्ञानंकरस्. G1 तदा (for तथा). — V1 om. 45c–46b. D7 om. (hapl.) 45c–46d. — c) K6 भविष्यति. — d) K6 तव (for न च). K7 Bo. 7 Dn4 D2. 5. 8 विमोक्षसे. ❀ Cs: रागात्, संसारात् । ❀

46 V1 om. 46ab; D7 om. 46 (for both, cf. v. l. 45). — a) K7 वीतरागस्य; G3 वीरागतश्च (for वीतरागश्च). M1. 6. 7 transp. पुत्रः and ते. — b) Ds1 D4. 8. 9 भविष्यसि (for °ष्यति). ❀ Cs. v: परमात्मा, परे ब्रह्मणि (Cv: परमे नारायणे), आत्मा चित्तं, यस्य । ❀

47 G1 om. (hapl.) 47–51; V1 reads the same on marg. — a) K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D3. 8. 5. 8 T1 G3. 6 Kumbh. ed. विप्राः (for पुत्रं). — b) D5 om. from मह up to ततो (in 48a). K7 -बुद्धियुक्तं (for °युक्तम्). — Ds1 repeats 47cd after पराशरो (in 48b). — c) K7 वशिष्ठम्; Ds1 (both times) विशिष्ठम् (for वसिष्ठम्). K7 T1 अग्रं. K4 Bo Dn1. n4 Ds1 (both times). s2 D2–4. 8 च तपो-; Da3. a4 तपसा; D7 °सां (for °सो). Da4 विधानं (for नि°). — d) K6 Bo. 6–9 Dn1. n4 Ds1 (both times). s2 D2. 3. 8 Kumbh. ed. यस्याति-; Da3. a4 यस्यामि-; D7 यश्चाति-; T1 यस्यापि (for यश्चापि). K1. 4 व्यतिरिच्यते इति; K2 °रिश्यत इति; K6 Bo. 6–9 Da3 Dn1. n4 Ds2 D2. 3. 8 Kumbh. ed. °रिच्यते भाः; Da4 °रित्यनेनाः; Ds1 (both times) व्यतिचव्यते भाः; D7 T1 G3. 6 ह्यतिरिच्य भाति (for व्यतिरिच्य भाति).

48 For the repetition in Ds1, cf. v. l. 47. G1 om. 48; D5 om. up to ततो (for both, cf. v. l. 47). V1 reads 48 on marg. — a) B9 तस्यार्थये (for °न्वये). K6 वापि (for चापि). Da4 महर्षीः; Dn4 °र्षि-. K1. 2. 4 V1 D7 T1 G3. 6 जातो हि तस्यान्व-(K2 °न्वि)य एष विप्रः. — b) K4 महाप्रभाव. — c) K7 वेदविधिर् (for °निधिर्). K1. 2. 4 Ds1 D9 वसिष्ठो; K6. 7 D4 वशिष्ठो (for वरिष्ठो). — d) K7 महातपो; D7 T1 G3. 6 M1. 5–7 °मना (for °तपा). D7 T1 G3. 6

महातपा वै तपसो निवासः ।
कानीनगर्भः पितृकन्यकायां
तस्मादृषेस्त्वं भविता च पुत्रः ॥ ४८
भूतभव्यभविष्याणां छिन्नसर्वार्थसंशयः ।
ये ह्यतिक्रान्तकाः पूर्वं सहस्रयुगपर्ययाः ॥ ४९
तांश्च सर्वान्मयोद्दिष्टान्द्रक्ष्यसे तपसान्वितः ।
पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्ययान् ॥ ५०
अनादिनिधनं लोके चक्रहस्तं च मां मुने ।
अनुध्यानान्मम मुने नैतद्वचनमन्यथा ॥ ५१
शनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान् ।
तस्मिन्मन्वन्तरे चैव सप्तर्षिगणपूर्वकः ।
त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ५२
व्यास उवाच ।
एवं सारस्वतमृषिमपान्तरतमं तदा ।
उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत् ॥ ५३
सोऽहं तस्य प्रसादेन देवस्य हरिमेधसः ।

C. 12. 13686
B. 12. 330(40).58
K. 12. 339. 56

तपसां (for °सो). —$^c$) M1 कानीनगर्भाः. K1.4.7 D7 T1 G3.6 M1.5.7 -कन्यकायास्; K2 °यायास् (for -कन्यकायां). ❀ Ca: पितृकन्यकायां, पितृगणकन्यकायाम् ॥ Cs: कानीनो गर्भः, अदत्तायामुत्पन्नः । पितृकन्यकायां, योजनगन्धायाम् । सा हि पूर्वजन्मनि पितॄणां मानसी कन्या । ❀ —$^f$) K1.2.4 सं- (for त्वं). M1.6.7 भवितासि (for °ता च). D7 T1 G3.6 तस्मादृषे त्वं भाविता स (D7 °तासि) विप्रः. ❀ Ca: तस्मात्, पराशरात् । ❀

49 G1 om. 49 (cf. v. l. 47); V1 reads it on marg. 49$^{ab}$ is damaged in B7. —$^b$) Bo छिंधि (for छिन्न-). K7 D4.7.9 T1 G3.6 Kumbh. ed. ज्ञानानां वेत्स्यसे गतिं. —$^c$) M7 येष्यति- (for ये ह्यति-). V1 -क्रांतिकाः; Bo -क्रांतिनाः; D5 -क्रांततः; D7 T1 G3.6 -क्रांतगाः (for -क्रान्तकाः). D4 M5 पूर्व-; Kumbh. ed. पूर्वैं (for पूर्वं). —$^d$) K6 Bo.6–9 Da3.a4 D8 D5 Cs (gloss: सहस्रयुगपर्ययात्, भविष्यत्कल्पात्, चक्रवत्परिवर्तमानात्) -पर्ययात्; K7 D4.9 -पर्यये; D3 -पर्ययः; T1 -पर्यगाः (for -पर्ययाः).

50 G1 om. 50 (cf. v. l. 47); V1 reads the same on marg. —$^a$) Dn4 तान्. K7 Dn3 D4 T1 G6 M1.6.7 मया दिष्टान्; D7 M5 मया दिष्टो (for मयोद्दिष्टान्). —$^b$) K1 प्रेक्ष्यसे; K2.4 प्रेक्षसे; K6 Bo रक्षसे (for द्रक्ष्यसे). K2.4 तपसान्विताः; D7 T1 G3.6 M1.5–7 नात्र संशयः. —$^c$) K7 Dn4 द्रक्षसि; Da4 द्रक्ष्यति. K1.2 V1 D7 T1 G3.6 चानेकान्; K6 वानेक- (for चा°). K6 Bo.6–9 Da3.a4 Dn4 Ds1 -पर्ययात्; K7 D4.9 -पर्ययं (for -पर्ययान्).

51 G1 om. 51 (cf. v. l. 47). V1 reads 51 on marg. —$^a$) K2 अनाधि- (for °दि-). D4.7.9 T1 G3.6 M1.5–7 -निधनाद् (for -निधनं). —$^b$) Da3 चक्रं (for चक्र-). K1.2 तथा (for मुने). K6 Bo.6–9 चक्रबंधं महामुने; K7 D4.7.9 T1 G3.6 M1.5–7 चक्रवक्त्रं (K7 D4.9 °वक्त्र) महामुने. —$^c$) K6 सुते (for मुने). — After 51, K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 Kumbh. ed. ins.:

904* भविष्यति महासत्त्व ख्यातिश्चाप्यतुला तव ।

[V1 भविष्यसि. K6 महासत्त्वं (for °सत्त्व). Da3 चाप्यबला (for °तुला). D5 तथा (for तव).]

52 $^{ab}$) K1.2 भविष्यंति. M5 मुनिर् (for मनुर्). ❀ Ca: शनैश्चरः, शनैश्चरभ्राता । कल्पान्तरे वा शनिरेव भविता मनुरिति ॥ Cv: शनैः, एकसप्ततिमहायुगपर्यन्तं चरतीति शनैश्चरः, वैवस्वतमनुः । —$^c$) K1.2 अस्मिन् (for त°). —$^d$) K1.6 Bo.6 (marg. as in text).9 Da3.a4 Dn1.n4 D8 D3.8.9 M5 Kumbh. ed. मन्वादि- (for सप्तर्षि-). D7 T1 G3.6 M1.6 -पूर्वगः; M5 -पूजितः (for -पूर्वकः). K2 सप्तवर्षे च पूर्वकः; K4 सप्तर्षे चणपूर्वकः (sic); V1 स सप्तगणपूर्वकः. —$^e$) Da3 तात; M7 वत्सा (for वत्स). —$^f$) M1.6.7 सं(M7 स)-प्रसादान् (for मत्प्र°). — After 52, K6 V1 Bo.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 Kumbh. ed. ins.:

905* यत्किंचिद्विद्यते लोके सर्वं तन्मद्विचेष्टितम् ।
अन्यो ह्यन्यं चिन्तयति स्वच्छन्दं विदधाम्यहम् ।

[(L. 1) D5 सर्वं (for किंचिद्). K6 वर्धते; V1 D5 वर्तते; Da3.a4 दुर्लभे; Ds1 D8 विदितं (for विद्यते). —(L. 2) K6 ह्यन्नं; V1 ह्यन्यच्; Dn4 स्वन्यं (for ह्यन्यं). K6 चिंतयंति.]

53 MSS. om. the ref. —$^a$) D8 येवं (for एवं). —$^b$) K1 अपांतरतरं; D7 T1 G3.6 अवांतरतमं; M1.6.7 अपांतरतमस् (for अपान्तरतमं). K7 Bo Dn1.n4 D8 D2–4.8.9 Kumbh. ed. तथा; D5 यथा (for तदा). G1 असप्तांतरतं तदा. —$^c$) Da3.a4 T1 G3.6 ईशानं (for °नः). —$^d$) K7 साधयस्वेदमब्रवीत्; D5 °यस्व तथाब्रवीत्.

C. 12. 13996
B. 12. 350(49) 59
K. 12. 339. 58

अपान्तरतमा नाम ततो जातोऽऽज्ञया हरेः ।
पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः ॥ ५४
तदेतत्कथितं जन्म मया पूर्वकमात्मनः ।
नारायणप्रसादेन तथा नारायणांशजम् ॥ ५५
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ॥ ५६
एतद्वः कथितं सर्वं यन्मां पृच्छथ पुत्रकाः ।
पूर्वजन्म भविष्यं च भक्तानां स्नेहतो मया ॥ ५७

वैशंपायन उवाच ।

एष ते कथितः पूर्वं संभवोऽस्मद्गुरोर्नृप ।
व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ॥ ५८
सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ५९
सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥ ६०
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥ ६१
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ६२
पञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान्स्वयम् ।

---

54 a) K1.2.4 Ds1 D4.9 G1 Kumbh. ed. अपांतरतमो; T1 G2.6 अवांतरतमा (for अपान्तर°). D7 G1 Kumbh. ed. नाम्ना (for नाम). — d) K7 V1 D4.5.9 T1 G1.3.6 तदा; D7 तथा (for ततो). K7 जाता (for जातो). K1.2.4 हरे जातस्तदाज्ञया. — f) K6.7 V1 B0.9 D9 वाशिष्ठ-. G1 -नंदन (for -नन्दनः).

55 a) Da3 तदैतद्. D5 कर्म (for जन्म). — b) D5 जन्म- (for मया). — d) K1.2 D5.7.9 T1 G1.3.6 M1.6.7 Kumbh. ed. तदा; M5 मया (for तथा). D5 नारायणाश्रयं; G1 M1.6.7 °णांगजं (for °णांशजम्).

56 K1 om. 56. — a) G1 तप्त- (for तप्तं). — b) D5 जपः (for तपः). D8 -दारुणः (for -दारुणम्). — c) K2 B9 D5 श्रेष्ठ. — d) K2 परमेन; K6 °मेश- (for °मेण).

57 a) G1 om. एतद्. B8.9 तत्; Da3 वा (for वः). B7 G3 M1.6.7 पूर्वं (for सर्वं). — b) D4 M1.5–7 मा (for मां). K1.2 B0.3 Da4 Dn1.n4 D3 D2–5.8.9 T1 G1 Kumbh. ed. पृच्छत; K4 °ति; K7 °ध्व (for °थ). K7 D4.9 सुव्रताः; Da4 पुत्रकः. — c) K2 पूर्वं (for पूर्व-). K1.2 भविष्यश्च; D7 T1 G1.3.6 °ष्यच् (for °ष्यं). — d) K1.2 यथा (for मया). — After 57, K6 B7–9 Da3.a4 Dn4 Cnp Cp ins. an addl. colophon [*sub-parvan:* K6 B8.9 Da3.a4 Dn4 मोक्षधर्म. — *Adhy. name:* K6 B7–9 Da3.a4 नारायणीयं. — *Adhy. no.* (figures, words or both): K6 75; B7 Dn4 173; B8 275 ].

58 a) K1.2.4 वः (for ते). K1.2 B6–8 D7 Kumbh. ed. पूर्वः; Da3.a4 Dn4 M1 पूर्व- (for पूर्वं). D5 एतत्ते कथितं सर्वं. — b) K1.2 स (for ऽस्मद्-). Da4 नृपः (for नृप). — d) V1 B8.9 D7 T1 G1.3.6 पृष्टं (for पृष्टः). K1.2.4 तथा; Dn4 पुरा (for पुनः). — After 58, B6 ins. an addl. colophon [*sub-parvan:* B6 मोक्षधर्म. — *Adhy. name:* B6 नारायणीयं ].

59 Before 59, B6 ins. वैशंपायन उवाच. — a) K1.2.6 B9 Da4 Dn4 D6.7.8 सांख्य- (for सांख्यं). K1.2.4 D7 T1 G1.3.6 -योगः (for योगं). D8 G3 Kumbh. ed. पांचरात्रं (for पञ्च°). — b) K4 D7 वेदः; K7 M5 वेदान् (for वेदाः). K4 पशुपतं; B9 पाशुपतस् (for °पतं). — c) T1 ज्ञातानि (for ज्ञानानि). K1.2 M5 राजेंद्र (for राजर्षे). — d) Da4 M1.7 विधि- (for विद्धि). K6 तु (for वै). K4 विद्धि नामानि तानि वै. ❀ Cn: नानामतानि, भिन्नप्रस्थानानि ॥ Cs: नानाविधपुरुषमतानि । प्रणेतृभेदादर्थभेद इत्यर्थः । ❀

60 a) M7 कपिलं (for °लः). G1 सांख्यवक्ता च कपिलः. — K7 om. (hapl.) 60c–61b. — d) K1.2 D7 T1 G1.3.6 वक्ता (for वेत्ता). Da4 Dn4 M1.7 नान्य-; M6 नैतौ (for नान्यः). M6 पुरातनौ (for °तनः).

61 K7 om. 61ab (cf. v. l. 60). — a) K1.2.4.6 D4.9 अपांतरतमश्च; T1 G3.6 अवांतरतमाश्च (for अपान्तर°). D7 T1 G1.3.6 M1.5–7 नाम (for चैव). — b) M1.6.7 कीर्तितः (for उच्यते). — c) B9 प्राचीनगर्भस् (for °गर्भं). — d) Da4 केशवः; Dn4 केवलं (for केचन).

62 a) K2 उमापति- (for °पतिर्). Da3.a4 Dn4 भूतपति-; G1 पशुपतिः (for भूत°). — c) K7 D4.9

सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥ ६३
यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशां पते ॥ ६४
तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥ ६५
निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान्हेतुबलान्नाध्यावसति माधवः ॥ ६६
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥ ६७

सांख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैः समस्तैरृषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम् ॥ ६८
शुभाशुभं कर्म समीरितं य-
त्प्रवर्तते सर्वलोकेषु किंचित् ।
तस्मादृषेस्तद्भवतीति विद्या-
द्दिव्यन्तरिक्षे भुवि चाप्सु चापि ॥ ६९

C.12.13712
B.12.350(49).74
K.12.359.74

इति श्रीमहाभारते शान्तिपर्वणि सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥ ]

---

अव्यक्तो (for °ग्रो). — d) Dn4 शिव; D5 G3 शिवं; G3 (also) शुभं (for शिवः). M1.6.7 ज्ञानपाशुपतिं शिवं.

63 a) K3 Kumbh. ed. पांचरात्रस्य; D7 पंचरात्रं तु (for °रात्रस्य). K7 D4.9 कृष्णश्च; Da3.a4 कृत्स्न* (for कृत्स्नस्य). — b) K1.2.4 Kumbh. ed. वक्ता (for वेत्ता). K7 D4.9 स (for तु). D7 T1 G1.3.6 M1.6.7 वक्ता नारायणः स्वयं. — cd) K7 D4.5.9 [अ]पि; M6 तु (for च). Da4 नृप श्रेष्ठं. Cv ज्ञानेष्वेतेषु राजेंद्र सर्वेष्वेतद्विशिष्यते.

64 a) K3.4 Dn4 यथागम-; B6-9 Da3.a4 D5 °गतं; M6 °योगं; Cs (gloss: यथाश्रद्धम्) °गमं (as in text). K7 D8 D7 T1 G1.3.6 M1.5-7 Cs (gloss: यथोपपत्ति) यथान्यायं; B6.8 Da3.a4 तथा ज्ञानं (for यथाज्ञानं). — b) B7 Dn4 नारायण- (for °णः). Ds1 प्रभुं; D7 पुरा; G3 परः (for प्रभुः). ※ Cs: निष्ठा, परं प्रतिपाद्यम् । ※ — c) K1.2.7 D4.9 चैवम् (for चैनम्). K7 Da3.a4 M1 एव; D7 T1 G1.3.6 M6 अभि- (for एवं).

65 a) K6 V1 B0.6-9 Da3.a4 Dn1.n4 Ds2 D2.3.8 -कर्तारः (for -कर्तारं). — b) K3 प्रविशंति (for प्रवदन्ति). — c) V1 D5 T1 G3 M1.6.7 निष्ठा (for निष्ठां). M1.6.7 नारायण (for °यणम्). M7 ऋषिर् (for °षिं). — d) K6 B0.6-9 Da3.a4 Dn1.n4 D5 D2.3.8 वचो मम (for च वादिनः).

66 a) K3 निःसंचयेषु (for °शयेषु). K1.2.4 सत्त्वेषु; K7 D4.5.9 धर्मेषु; D7 T1 G1.3.6 भूतेषु (for सर्वेषु). — b) K6 V1 B6-9 Da4 स वसते; K7 D4.9 M1.5-7 संवसते (for वसति वै). — c) K7 D9 हेतुकल्पान्; D4 corrupt; D5 °जातान् (for °बलान्). ※ Cn: हेतुबलात्, कुतर्कबलात् । ※ — d) K6 D4 [अ]ध्यावसति. K1.2 मानवान्; K6 Da4 मानवः; Dn4 माधवं (for °वः).

67 a) Bom. Kumbh. ed. पांचरात्र- (for पञ्च°). K1 -विदं; K7 -विदा (for -विदो). M1.6.7 च (for तु). — b) K6 यथाक्रमपरान्; D5 °विदो; G1 यथा चोक्तपरान्. ※ Cp: यथाक्रमपराः, शास्त्रसमर्पितक्रमेणानुष्ठातारः ॥ Cs: यथोक्तपञ्चकालक्रमानुष्ठायिनः । ※ — c) M5 एकांति- (for एकान्त-). — d) Dn4 सा (for ते). G1 हि (for वै).

68 a) K7 om. च. T1 G1.6 योगश्च (for योगं). K6 सनातनस्वे; K7 Dn4 D4.5.9 M1 °नं वै (Dn4 M1 द्वे); Cn (gloss: श्रुतिप्रतिपादितत्वादाद्यन्तशून्ये) °तने द्वे (as in text). — b) Ds1 निखिलाश्च (for °लेन). — c) K1.2.4.7 D5.9 G1 शास्त्रैः; D7 एतत्; T1 G3.6 एते (for सर्वैः). D5 समग्रैर्; D7 समस्ते (for °स्तैर्). K1.2 Ds1 M5 नियुक्तो; D7 T1 G6 निरुक्ते; Cs (gloss: निश्चयेनोक्तः) °क्तो (as in text). — d) D7 T1 G3.6 नारायणं; M5 °यणाद् (for °यणो). G1 पुराणः (for °णम्).

69 a) K6 B7.8 (marg. as in text) समीरणं; Cn (gloss: वेदे विहितम्) °रितं (as in text). — b) B0 om. सर्वे. G1 -जनेषु (for -लोकेषु). T1 G3.6 कश्चित् (for किंचित्). — c) Da4 भवंति (for भवति). K1.4 Da4 Dn4 D4.9 G1 M7 विद्या; K6 दिव्या (for विद्याद्).

# [ ३३८

C. 12. 13713
B. 12. 341(50).1
K. 12. 360. 1

जनमेजय उवाच ।
बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ॥ १
वैशंपायन उवाच ।
बहवः पुरुषा लोके सांख्ययोगविचारिणाम् ।
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ २
बहूनां पुरुषाणां च यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ॥ ३
नमस्कृत्वा तु गुरवे व्यासायामिततेजसे ।
तपोयुक्ताय दान्ताय वन्द्याय परमर्षये ॥ ४
इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव ।
ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितम् ॥ ५
उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥ ६

---

❀ Cn : तस्मादृषेः, नारायणात् । ❀ —d) K1.2.4 D4.9 दिक्ष्वंतरिक्षे; K6.7 V1 B0.6.8.9 दिव्यं( K6 °व्यां )तरीक्षे (for °रिक्षे). K7 D4 वाप्सु; Dn1.n4 D8 चाप्सु (for चाप्सु). K6 B6-9 Da3.a4 चैव; K7 D4.5.9 वापि; V1 B0 Dn1.n4 D8 D2.3.8 Kumbh. ed. चेति (for चापि).

Colophon. Ś1 D6 T2 G2 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M2-4 absent. —*Sub-parvan*: K1.2.4.6.7 V1 B6.8.9 Da3.a4 Dn1.n4 D8 D2-5.7-9 T1 G1.6 M1.5-7 मोक्षधर्म. —*Adhy. name*: K1.2.4 B9 G1.6 नारायणीयं; K6 B6 नारायणीये कृष्ण( B6 वेद )-व्यासोत्पत्तिः; K7 D4.5.9 नरनारायणीयं; V1 B0.7.8 Da3.a4 नारायणीये कृष्णद्वैपायनोत्पत्तिः; Dn1 D8 D2.3.8 नारायणीये द्वैपायनोत्पत्तिः; M1.5-7 नारायणीये कृष्णद्वैपायनजन्मकथनं. —*Adhy. no.* (figures, words or both): K6 76; B7 Dn4 174; B3 276; Dn1 G1 175; Da3 T1 G3 177; G6 176; M1.6.7 172; M5 207. —*Śloka no.*: Da4 D8 12; Dn1 75.

## 338

☞ This adhy. is missing in Ś1 D6 T2 G2 (cf. v. l. 12. 336. 65; 283. 15; 336. 1; 335. 40).

1 1ab is quoted in Śaṁ. Bh. on Ved. Sū. II. i. 1. —a) Da3 reads from ब्रह्मन् up to बहवः (in 2a) on marg. K1.7 D4.9 राजन् (for ब्रह्मन्). —b) D4 तु (for तु). —c) M7 कोप्यत्र (for को ह्यत्र). K6 B6 D8 D5.7.9 T1 G1.3.6 M7 पुरुष- (for पुरुषः). Da3 D4 M1.6.7 श्रेष्ठ (for श्रेष्ठः). —d) G1 M1.5-7 का (for को).

2 Da3 reads up to बहवः on marg. After the ref., D7 T1 G1.3.6 read 3-4 transposed. —a) Da3 om. पुरुषा. B7 damaged; M1.6.7 राजन् (for लोके). —b) B7 damaged. K1.2.4 M5 -विचारिणः; K6 B0.6.8.9 Da3.a4 Dn1.n4 D8 D2.3.5.8 °रणे; V1 °रिणे; M1 °रणाः (for °रिणाम्). —c) K1.2 नैतम्; K6 B6-8 नैवम्; K7 D4.9 नैनम् (for नैतद्). Da3.a4 नैव गच्छंति पुरुषम्.

3 = (var.) 25. Quoted in Śaṁ. Bh. on Ved. Sū. II. i. 1. For the sequence in D7 T1 G1.3.6, cf. v. l. 2. —a) D7 T1 G3.6 M5 हि; M1.6.7 तु (for च). ❀ Cn: पुरुषाणां, पूर्षु उपाधिषु वसताम् । ❀ —b) K1.2.7 D4.9 तथैका (for य°). K4 D8 उद्यते (for उच्यते). —c) K2 यथा तं; K7 D4.9 तमहं (for तथा तं). ❀ Ca: विश्वं, सर्वाधिष्ठातारम् । ❀ —d) K2 व्याख्यास्यापि; Da4 व्याख्यामि च; D7 T1 G1.3.6 M1.5-7 आख्यास्यामि (for व्याख्या°). D7 T1 G6 M1.5-7 गुणातिगं; G3 °गतिं (for °धिकम्).

4 For sequence in D7 T1 G1.3.6, cf. v. l. 2. —a) K6 V1 B0.6-9 Da3.a4 Dn1.n4 D8 D2.3.8 च (for तु). —b) K6 V1 B0.6-9 Da3.a4 Dn1.n4 D8 D2.3.8 M1.6.7 व्यासाय विदितात्मने. —c) D7 T1 G3.6 M1.5-7 तपोनित्याय. D4 तपोयुक्तावदाताय. —d) D5 वर्णाय (for वन्द्याय). D5 परमात्मने (for °मर्षये).

5 a) G1 वै (for हि). D5 इदं सूक्तं हि पुरुषं. —b) D7 T1 G1.3.6 M1.6.7 पठ्यते (for पार्थिव). —c) Da3 corrupt. K1 नृतं; K7 कृतं (for ऋतं). D7 T1 G3.6 प्रख्यातम् (for वि°). —d) Dn4 ऋषिं (for ऋषि-). K1 -संगेन; K2.4.6 B6-8 M5 -संघेन; B7 -संहेन (for -सिंहेन). K7 V1 D9 भाषितं; D4 भारत (for चिन्तितम्).

6 D4 om. (hapl.) 6. —a) K1 उत्सर्गेनाप-; D8

समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् ।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥ ७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशां पते ॥ ८
क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः ।
वैजयन्त इति ख्यातः पर्वतप्रवरो नृप ॥ ९
तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन् ।
वैराजसद्ने नित्यं वैजयन्तं निषेवते ॥ १०
अथ तत्रासतस्तस्य चतुर्वक्त्रस्य धीमतः ।
ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ।
आकाशेनैव योगीशः पुरा त्रिनयनः प्रभुः ॥ ११

ततः खान्निपपाताशु धरणीधरमूर्धनि ।
अग्रतश्चाभवत्प्रीतो ववन्दे चापि पादयोः ॥ १२
तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ।
उत्थापयामास तदा प्रभुरेकः प्रजापतिः ॥ १३
उवाच चैनं भगवांश्चिरस्यागतमात्मजम् ।
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकम् ॥ १४
कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ।
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः ॥ १५

रुद्र उवाच ।

त्वत्प्रसादेन भगवन्स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥ १६

C. 12. 13729
B. 12. 35. [30]. 17
K. 12. 360. 15

---

°गैनापि ( for °गैणाप- ). G1 -वर्गेण ( for -वादेन ). ❀ Cp : उत्सर्गेणेति, उत्सर्गसिद्धस्य देहात्माभिमावस्य अपदार्थत्वं कपिलादिशास्त्रप्रवृत्तिरित्यर्थः ॥ Cs : स्वभावसिद्धो भेदभ्रम उत्सर्गः, तेन कपिलादिभिरात्मनो नानात्वप्रतिपादकानि शास्त्राणि कृतानि । नानात्वनिराकरणमपवादः । तेन पुरुषैक्यप्रतिपादकं शास्त्रं व्यासेन कृतम् । ❀ — b) K1. 2. 4 मुनिभिः ( for ऋषिभिः ).

7 a) T1 G6 समागतस् ( for °सतस् ). K6 G1 M6 तद् ( for यद् ). — b) K1. 2. 4 M5 पुरुषे कार्यम्; K7 D4. 5. 7. 9 °षं स्वेकम्; T1 °षैः काम्यम्; G1 °षैकार्थम्; G3. 6 M1. 7 °षैकास्यम्; M6 °षे शास्त्रम् ( for °षैकत्वम् ). — d) B8 प्रसादम् ( for °दाद् ). K1. 2. 4 तस्य तेजसः अमितौ° ).

8 a) G1 तत्रापि. — d) K1 त्र्यंभकस्य ( sic ).

9 b) G1 -सप्रभं. — d) K7 Ds1 सर्वतः ( for पर्वत- ). D7 T1 G3. 6 पर्वतः परमो नृप.

10 a) K1. 2 Ds1 अत्र; M5 यत्र ( for तत्र ). K1. 2. 4 -गतिर् ( for -गतिं ). Dn1 T1 G3. 6 M6 देवम्. Da3. a4 तत्राध्यात्म( Da4 °त्मा )गतिस्त्वेव. ❀ Cs : अध्यात्मगतिम्, आत्मतत्त्वनिर्णयम् । ❀ — b) D7 T1 G3. 6 एकांते ( for एकाकी ). K6 परिचिंतयन्; Ds1 प्रति°; D3. 5 प्रविचिंतयत्. — c) V1 lacuna; Bo D8 -सदनं; Dn1 D8 D2. 7. 8 T1 G3. 6 M1. 5–7 -सदनात्; Dn4 -सदनी ( for °ने ). K1. 2. 4 G1 वैराज( G1 °ज्य )नित्यः स ( G1 स ) तदा. ❀ Ca : वैराजं, मेरौ ब्रह्मणः सदनम् । ❀ — V1 reads 10c on marg. — d) K1. 7 V1 D7 वैजयंत-; Ds1 °यंते ( for °यन्तं ). D4 निषेवत; D7 निषेविते ( for °वते ).

11 e) K1 G1 योगी तु; K2. 4 योगे तु; K7 D4. 9 योगेशः; D5 योगी स ( for योगीशः ). K6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 आकाशेन महा( D8 [ marg. ; *sec. m.* ] पुरा )योगी. — f) K1. 2. 4 G1 पुत्रस् ( for पुरा ). Da4 पुनः ( for प्रभुः ).

12 a) G1 ततश्च ( for ततः खान् ). Ds1 निःपपात. Ds1 [अ]प्सु ( for [आ]शु ). — b) Da4 Dn4 -मूर्धनी. — c) M1. 6. 7 भवः ( for [अ]भवत् ). K1 प्रीते; Da4 प्रीतौ; D7 T1 G3. 6 भीतो ( for प्रीतो ).

13 b) D7 T1 G1. 3. 6 M1. 5–7 स्पृष्ट्वा ( for दृष्ट्वा ). K6 सर्वेन ( for सव्येन ). — d) K7 D4. 5. 9 भुवनेशः ( for प्रभुरेकः ). B8 सनातनः ( for प्रजापतिः ).

14 b) K7 D4. 9 शिरस्याघ्रातमात्मजं; D5 निरस्याघ्रायमात्मजं ( corrupt ). — Before 14cd, K1. 2. 4. 7 Dn1 D4. 5. 9 G1 M1. 5–7 ins. ब्रह्मोवाच; K6 V1 Bo. 6–9 Da3. a4 Dn4 D8 D2. 3. 8 पितामह उवाच. — c) K7 मया ( for महा- ). K1. 2. 4. 7 D4. 5. 9 G1 M1. 7 -योगिन् ( for -बाहो ). — d) K2 दृष्ट्वा ( for दिष्ट्या ). V1 D5 G1 मेंतिके; M5 चांतिकं ( for मेऽन्तिकम् ).

15 a) V1 वत्स; D7 तत्र ( for पुत्र ). — b) D7 -तपसे; T1 G3. 6 -तपसः ( for °सोः ). V1 स्म भोः; Da4 यदा; D5 तदा ( for सदा ). — c) D7 T1 G3. 6 M5 हि त्वं ( by transp. ). K1. 2. 4. 7 D4. 5. 9 G1 त्वं चैवोग्रतपा नित्यं. — d) M5 तस्मात् ( for ततः ). K1. 2. 4. 7 D4. 5. 9 [अ]हं ( for ते ). K7 D4. 9 तव; D7 T1 G1. 3. 6 M1. 5–7 तपः ( for पुनः ).

C. 12. 13730
B. 12. 351(50). 16
K. 12. 360. 16

चिरदृष्टो हि भगवान्वैराजसदने मया ।
ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् ॥ १७
कौतूहलं चापि हि मे एकान्तगमनेन ते ।
नैतत्कारणमल्पं हि भविष्यति पितामह ॥ १८
किं नु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।
सुरासुरैरध्युषितमृषिभिश्चामितप्रभैः ॥ १९
गन्धर्वैरप्सरोभिश्च सततं संनिषेवितम् ।
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥ २०

ब्रह्मोवाच ।

वैजयन्तो गिरिवरः सततं सेव्यते मया ।
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ २१

रुद्र उवाच ।

बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुवा ।
सृज्यन्ते चापरे ब्रह्मन्स चैकः पुरुषो विराट् ॥ २२
को ह्यसौ चिन्त्यते ब्रह्मंस्त्वया वै पुरुषोत्तमः ।
एतन्मे संशयं ब्रूहि महत्कौतूहलं हि मे ॥ २३

ब्रह्मोवाच ।

बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ।
आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते ॥ २४

---

16 a) K7 Da4 Dn4 (by corr. as in text) M6 भगवान्. — b) K1 V1 D7 T1 G1.3.6 M1.6.7 -तपसो मम (for °सोमम). — D7 repeats $16^{cd}$ after 17. — d) Bo.3 Dn1 Ds D2.3.8 त्वथ; Da4 Dn4 त्वया (for तथा).

17 a) K7 D4.9 T1 G3.6 चिराद् (for चिर-). K1.2.4.7 D4.5.7.9 T1 G3.6 [ऽ]सि भगवन् (for हि भगवान्). G1 चिरं द्रष्टासि भगवन्. — b) T1 (before corr. as in text) मम (for मया). D7 वैराजे ह मनो मया. — c) K7 D4.5.7.9 [ऽ]स्मि (for ऽहं). D8 पर्वते. K7 Da4 प्राप्तम्. — d) K1.2.7 इमं; G1 स मे (for त्विमं). — After 17, D7 repeats $16^{cd}$.

18 a) G1 याति वापि (for चापि हि मे). Da3 om. मे. — b) K1.2 चैकांतगमनेन; Dn4 एकांताग°. K7 D9 मे; D7 T1 G3.6 वै (for ते). — K1.2.7 D4.9 G1 om. $18^{cd}$. — c) M1.6.7 अप्यल्पं (for अल्पं हि).

19 a) Ds1 कं (for किं). K6.7 Dn4 Ds D4.5.7.9 T1 G1.3.6 तु (for नु). K1 तत्सदन-; Cv (gloss: सत्यलोकं) तत्सदनं (as in text). — b) K4 क्षुत्पिपासादि- (for °साविवि-). — c) M5 पुरा सुरैर्. K2 अभ्युषितम्; Dn4 अभ्यु°; G1 अच्युतितम् (for अध्युषितम्). — d) G1 -प्रभो (for -प्रभैः).

20 a) K1.2 om. up to सततं. — b) K1.2.4 **सेवितं; K7 संनिवेशितं; Ds1 D2 तं निषे(Ds1 °से)- वितं (for संनिषे°). — c) K2 उत्सृजेमं; D7 T1 G3.6 M5 °ज्यैनं; G1 °ज्यैवं; M1.6.7 °ज्यैतं (for °ज्येमं). — d) D7 T1 G3.6 M5 एकांतं; M7 एकाकिः (for °की). M1.7 अपि (for असि). — After 20, K1.2.4 ins. an addl. colophon [*Sub-parvan:* K1.2.4 मोक्षधर्म. — *Adhy. name:* K1.2.4 नारायणीयं].

21 D6 om. (hapl.) 21–23. V1 reads the ref. on marg. — a) K1.2 विशिष्टोयं (for वैजयन्तो). — b) K2 सेविते (for सेव्यते). — c) K1.2.6 तत्र (for अत्र). Da4 Ds1 [ऐ]काग्र्येण (for [ए]काग्रेण). — d) K2.4 चिंतते.

22 D6 om. 22 (cf. v. l. 21). K2.4 om. (hapl.) 22. V1 reads the ref. on marg.; the ref. is damaged in G1. — b) D7 दृष्टः (for सृष्टाः). — c) K1 Dn4 सृजंते; D4 सृज्यंत; D7 साक्ष्यंते; T1 G3.6 सृक्ष्यंते (for सृज्यन्ते). K1.7 D4.9 सम्यक् (for ब्रह्मन्). — d) K1 G1 कस् (for स). K1 त्वेकः; K6 वैकः; D7 T1 G3.6 M1.5–7 च कः; G1 त्वेष (for चैकः). Dn4 om. (hapl.) from पुरुषो up to बहवः (in $24^{a}$).

23 Dn4 D6 om. 23 (cf. v. l. 22, 21). — a) D7 T1 G3.6 यो (for को). K1.2.4 न्वसौ (for ह्यसौ). K2 चिंतते. — b) K7 D9 त्वयैषः; Bo.3 Dn1 Ds D2–4.7.8 T1 G3.6 M1.5–7 त्वयैकः (for त्वया वै). After वै, G1 is mostly damaged for the rest of the adhy. K1.2.4 B7.8 Da3.a4 Ds1 D4 पुरुषोत्तम. — c) K1 एतं; K2 एनं (for एतन्). K7 D4.7.9 T1 G3.6 M1.5–7 छिंधि (for ब्रूहि). — d) K7 D7 T1 G1.6 M1.5–7 परं (for महत्). K1.2.4 मम; D9 प्रभो (for हि मे).

24 Dn4 om. up to बहवः (cf. v. l. 22). G1 damaged. — a) Da4 यत्र (for पुत्र). — b) K1,

बहूनां पुरुषाणां स यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ।
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ॥ २५

इति श्रीमहाभारते शान्तिपर्वणि अष्टात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥ ]

# [ ३३९

ब्रह्मोवाच ।
शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ १
न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम ।
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २
अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ।

C. 12. 13742
B. 12. 352[1].3
K. 12. 361. 3

---

3. 4 यस्त्वया; D2. 8 त्वया ये (by transp.). K1. 2. 4 समुदाहृतं. — cd) Ca एनत् (for एतद्). D5 मैवम्; D7 T1 G3. 6 चैवम्; M1. 7 नैतद् (for नैवम्). ❀ Ca: एवमेनदिति। सत्यमुक्तमिदं त्वया यद्बहवः पुरुषा इति। किं तु अतिक्रान्तम्, अतिक्रमरूपमिदम्। तत्रैवं न द्रष्टव्यम् ॥ Cs: अतिक्रान्तं, विचारमन्तरेणैव निश्चितम् ॥ Cv: एतत् त्वयोक्तं पुरुषबहुत्वं, एवं भवत्येव। एतेभ्यः अतिक्रान्तं, अतिशयितं दैवमपि द्रष्टव्यम्। ❀ — e) K1. 2 आदा(K2 °धा)नं तु; B7 आधारस्तु; D7 T1 G3. 6 आधारत्वं; Ca (gloss: आधारत्वं) Cn (gloss: अधिष्ठानं) °रं तु (as in text). K1. 2. 7 D4. 5. 9 प्रवक्ष्येहं; Dn4 प्रवक्षामि. — f) K7 D4. 9 तत्; D7 T1 G3. 6 M5 वै (for ते).

25 = (var.) 3; quoted in Śaṃ. Bh. on Ved. Sū. II. i. 1. G1 damaged. — a) K1. 2. 7 D4. 5 च; M1. 7 तु (for स). — b) K1. 2 तथैका; B8 यथैको (for °का). ❀ Ca: योनिः कारणम्, आत्मेच्छया नानालिङ्गशरीरनिर्माणद्वारा। ❀ — c) K1. 2. 4 ते (for तं). M5 परमं (for पुरुषं). B6 (marg.). 8 (marg. as in text) दिव्यं; M1. 7 सर्वं; Cn (gloss: विराजं) विश्वं (as in text). — d) K7 D4. 5. 9 M1. 5–7 परमं (M1. 7 पुरुषाः; M5 पुरुषं; M6 शृणुष्व) सुरसत्तम (K7 °मः; M5 °मं); Da3. a4 परमं सुखमुत्तमं; D7 T1 G3. 6 आख्यास्यामि गुणातिगं (D7 °गतं). ❀ Cn: परमं, सूत्रात्मानं सुमहत्तमं कारणम्। ❀ — G6 reads 25cd on marg. — e) D5 om. (hapl.) निर्गुणं. K6 V1 B0. 6–9 Da3. a4 D5 निर्गुणीभूत्वा (B7 Da3. a4 °ता). — f) D7 परं पदं (for सनातनम्).

Colophon damaged in G1; Ś1 D6 T2 G2 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 V1 B0. 6–9 Da3. a4 Dn1. n4 Ds1 D2–5. 7–9 T1 G6 M1. 5–7 मोक्षधर्मं. — *Adhy. name:* K1. 2. 4. 6 V1 B0. 6–9 Da3. a4 Dn1 Ds D2. 3. 8 नारायणीयं; K7 D4. 5. 9 नरनारायणीयं; D7 T1 G6 M1. 5–7 नारायणीये (om. in D7 T1) ब्रह्मरुद्रसंवादः. — *Adhy. no.* (figures, words or both): K6 77; K7 D4. 9 17; B7 Dn4 175; B8 277; Dn1 176; Ds2 D7 G3 178; T1 G6 177; M1. 6. 7 173; M5 208. — *Śloka no.:* Da4 26; Dn1. n4 D8 27.

## 339

☞ This adhy. is missing in Ś1 D6 T2 G2 (cf. v. l. 12. 336. 65; 283. 15; 336. 1; 335. 40).

1 G1 om. the ref. — a) G1 damaged from शृणु up to साक्षि (in 4e). K1. 2. 4 D7 T1 G3. 6 M1. 5–7 ह्येकः (for ह्येष). — c) K2 प्रमेयश्च; B7 [अ]व्ययश्चैव (for [अ]प्रमेयश्च). — d) Da4 सर्वगस्य; D5 °योगे (for °गश्च). K1. 2. 4. 7 D4. 5. 9 निगद्यते (for निरुच्यते).

2 G1 damaged. — a) K7 D4. 9 transp. न and स. K7 दृष्टं (for द्रष्टुं). — D7 om. 2b–3e. — b) K7 D5 सत्तमः; Da4 सत्तमं. — c) K4 सगुणा; B0 Da3. a4 M5 °णैर् (for °णो). K6 B6–8 Dn1 D2. 3. 5. 8 Kumbh. ed. सगुणैर्निर्गुणैर्विश्वो (K6 °ज्ञो); M1. 6. 7 °णैर्निर्गुणो दृश्यो. ❀ Cn: सगुणैः, बुद्धीन्द्रियादिसहितैः। निर्गुणैः कामादिहीनैर्मुक्तैः। ❀ — d) D5 त्वसौ (for ह्यसौ).

3 D7 om. 3abc (cf. v. l. 2). G1 damaged. — a) Da4 D4 अशरीर; D5 G3 lacuna (for °रः). ❀ Ca:

